[ प्रमाणवा० ३।५१३-१४ ] " ज्ञानान्तरेणानुभवे सोऽर्थः स्वानुभवे सति । प्र ( अ ) सिद्धः सिद्ध्यसंसिद्धेः कदा सिद्धो भवेत्पुनः ॥ तज्ज्ञानज्ञानजातौ चेदसिद्धः स्वात्मसंविदि । परसंविदि सिद्धस्तु स इत्येतत्सुभाषितम् ॥ तस्याप्यनुभवे ( ऽसिद्धे ) प्रथमस्याप्यसिद्धता । तत्रान्यसंविदुत्पत्तावनवस्था प्रसज्यते ॥ गोचरान्तरसञ्चारस्तथा न स्यात् स चेष्यते । गोचरान्तरसञ्चारे यदन्त्यं तत्स्वतोऽन्यतः ॥ न सि ( द्धयेत्तस्य चा ) सिद्धौ सर्वेषामप्यसिद्धता । अतश्चान्ध्यमशेषस्य जगतः सम्प्रसज्यते ॥" [ तत्त्वसं० पृ० ५६४ ] तत्त्वार्थश्लो० पृ० १६७ ।

**पृ० ३३. पं० ६. 'सारूप्येऽपि'**–पूर्वपक्षः–"हेतुभावादृते नान्या ग्राह्यता नाम काचन । तत्र बुद्धिर्यदाकारा तस्यास्तद् ग्राह्यमुच्यते ॥" [ प्रमाणवा० ३।२२४ ] "अर्थेन घटयत्येनां न हि मुक्त्वार्थरूपताम् । अन्यत्स्वभेदो ज्ञानस्य भेदकोऽपि कथञ्चन ॥ तस्मात् प्रमेयाधिगतेः साधनं मेयरूपता ।" [ प्रमाणवा० ३।३०५ ]

**पृ० ३४. पं० १५. 'सत्यं तमाहुः'**–"तदुक्तं न्यायविनिश्चये–सत्यं तमाहु··· सदर्थमसदर्थं वा······" [सिद्धिवि० टी० पृ० १८९] "सत्यं तमाहुर्विद्वांसो विद्यया विभ्रमेण यः ।" [ प्रमाणसं० पृ० १०७ ]

**पृ० ३४. पं० १६. 'विषयज्ञान'**–स्वसंवेदनज्ञानवादिभिः बौद्धैः हि विषयज्ञानतज्ज्ञानयोः भेददर्शनात् तदाकारता प्रसाध्यते । ग्रन्थकृता उक्तं यत्–विषयज्ञानतज्ज्ञानभेदः निराकारत्वेऽपि सुघटः । बौद्धानां तदाकारतासाधनप्रकारः इत्थं द्रष्टव्यः–

"विषयज्ञानतज्ज्ञानभेदाद् बुद्धेर्द्विरूपता । स्मृतेरप्युत्तरे काले नह्यसावविभावितः ॥" [ प्रमाणसमु० १।१२ ] "ननु चाकारः प्रमाणं स्वसंवेदनं फलमिति साकारसिद्धौ स्यात्, तदेव तु कथं सिद्ध्यति ? उक्तमत्र, अपि च–

विषयज्ञानतज्ज्ञानविशेषाद् बुद्धिरूपता ।

विषये रूपादौ यज्ज्ञानं तदर्थस्वाभासम्, विषयज्ञाने तु यज्ज्ञानं तदर्थानुरूपज्ञानाभासम् स्वाभासञ्च । अन्यथा यदि विषयज्ञानमर्थाकारमेव स्यात् स्वाकारमेव वा विषयज्ञानज्ञानमपि तदविशिष्टं स्यात् । विषये यत् ज्ञानं तदर्थस्वाभासमिति साध्यम्, उत्तरो हेतुः, अन्यथेत्यादि बाधकप्रमाणम् ।" [प्रमाणवार्त्तिकालं० पृ० ८३ ]

तुलना–"विषयज्ञानतद्विज्ञानयोरविशेषः–विषयाकारपरिच्छेदात्मनि ज्ञाने यदि स्वाकारपरिच्छेदो न स्यात् तद्विषये विज्ञाने विषयाकाररूपतैवेति तयोरविशेषः स्यात् ।" [ राजवा० पृ० ३५ ] " घटविज्ञानतज्ज्ञानविशेषस्तेन दुर्लभः ।" [ मी० श्लो० पृ० ३२४ ]

**पृ० ३४. पं० २५. 'अर्थज्ञानस्मृता'**–बौद्धा हि विषयसंकलितज्ञानस्मृत्यन्यथानुपपत्त्या तदाकारतां प्रसाधयन्ति । केनचिदाशङ्कितम्–'यत् मास्तु तदाकारता, केवलं ज्ञानमर्थकार्यम्, अतः अर्थसंकलितज्ञानस्मरणं जायते, न तु तदाकारतया' तत्र समाहितं बौद्धैः–'यत् तदाकारतां विनापि यदि अर्थकार्यतामात्रेण अर्थसंकलितस्मरणं स्यात्तदा ज्ञानम् आलोकस्य मनस्कारस्य वा कार्यं भवति, अतः आलोकसंकलितस्य मनस्कारसंकलितस्य वा ज्ञानस्य स्मरणं स्यात् । न च दृश्यते अतः स्वीकार्यम्–यत् यदाकारं ज्ञानं तदाकारानुरक्तस्य स्मरणमिति ।' यदि कारणत्वादेव अर्थस्य संकलनं ज्ञाने तदा घटेऽपि कुलालस्य कारणभूतस्य संकलनं स्यात्, तथा च घटस्मृतौ कुलालोऽपि स्मर्येत इत्यादि । ग्रन्थकृता अत्र तदाकारतास्थापनाय बौद्धैः य अतिप्रसङ्ग आपादितः स ज्ञानं निराकारं स्वीकृत्यापि शक्तिप्रतिनियमादेव समाहितः । अतिप्रसङ्गापादकः बौद्धग्रन्थस्त्वयम्–

"अर्थकार्यतया ज्ञानस्मृतावर्थस्मृतेर्यदि । भ्रान्त्या संकलनं ज्योतिर्मनस्कारेऽपि सा भवेत् ॥"

भ्रान्तिरिति सम्बन्धः । यद्यर्थस्य कार्यं विज्ञानम् अथापि अर्थे कार्यं व्यापारो यस्येति ज्ञानस्मृतौ नियमेन अर्थस्मरणम्, अतस्तदेव मूढमतिसन्तानस्य तथा भवति प्रतिपत्तिः । एवन्तर्हि ज्योतिर्मनस्कारेऽपि तथा प्रतीतिः स्यात् । यथा विषयकार्यता विज्ञानस्य तथा
5 आलोककार्यता मनस्कारकार्यतापि तेन द्वयसंकलनेनापि प्रतीयेत । न हि कार्यत्वे कश्चिद्विशेषः । अथ विषये व्यापृतत्वात् तत्संकलनं मनस्कारे तत्राव्याप्रि [ पृ ] तत्वात् तदा तर्हि आलोकेऽपि समान एव व्यापारः । न ह्यालोकमपहाय रूपे व्याप्रियते । तदसदेतत् । तस्माद्यथा आलोकप्रतिभासमिति न भवति तथा रूपप्रतिभासमिति न स्यात् ।...... ..तस्माद्रूपाद्याकारमेव विज्ञानम् । कार्यतया तु तथा प्रतिपत्तौ—

10 सर्वेषामपि कार्याणां कारणैः स्यात्तथा ग्रहः । कुलालादिविवेकेन न स्मर्येत घटस्ततः ॥

तेनापि कार्योऽपि घटादिः स्वकारणविवेकेन न स्मर्येत । अथ अर्थकृतः कश्चिदतिशयो येन ज्ञानस्मरणे अर्थोऽवि (पि) स्मर्यते, ज्ञानग्रहणे चार्थग्रहः, केवलस्य ज्ञानस्य न ग्रहणस्मरणे; घटादिस्तु केवलोऽपि गृह्यते तेनादानादिकञ्च । तदपि स्वपक्षबाधनाय । तथाहि–

'यस्मादतिशया (यो) ज्ञानमर्थसंसर्गभाजनम् । सारूप्यात्तत्किमन्यत्स्याद् दृष्टश्च यमलादिषु ॥

15 यदि तस्य विज्ञानस्य नार्थाकारता तदाऽर्थग्रहणेनैव सह विज्ञानं गृह्यते स्मर्यते चेति कोऽयं नियमः । तदर्थान्तर्गतं तु नियमेन तद्ग्रहणेनैव गृह्यत इति भवति नियमः । तस्मादर्थस्वरूपमेव विज्ञानमर्थग्रहणनान्तरीयकग्रहणं तत्स्मरणनान्तरीयकस्मरणञ्च ॥" [ प्रमाणवार्तिकालं० पृ० ८८-८९ ]

पृ० ३६. पं० ६. **'अन्तःशरीर'**–प्रज्ञाकरो हि स्वप्नावस्थायां सूक्ष्मशरीरं
20 स्वप्नान्तिकनामानं स्वीकरोति । तस्मिन्नेव त्रासलंघनधावनादयो भवन्ति । तदेव स्वप्रान्तिकं शरीरमत्र ग्रन्थकृता 'अन्तःशरीर' शब्देन आक्षिप्तम् । तन्निर्देशश्चेत्थम्–"यथा स्वप्रान्तिकः कायः त्रासलङ्घनधावनैः । जाग्रद्देहविकारस्य तथा जन्मान्तरेष्वपि ॥" [ प्रमाणवार्तिकालं० लि० पृ० १४८ ] "प्रज्ञाकरस्तु स्वप्नान्तिकशरीरवादी स्वप्नदशायामपि व्यवहारादिनिर्भासज्ञानस्य साक्षात् चिकीर्षादिप्रभवनियममभ्युपगच्छति..." [ सिद्धिवि० टी० पृ० १३८ B. ]

25 **पृ० ३६. पं० १०. 'विप्लुताक्षा'**–विज्ञानवादिनः विप्लुताक्षबुद्धि = तैमिरिक चन्द्रद्वयबुद्धि–दृष्टान्तेन सर्वेषां प्रत्ययानां निरालम्बनत्वं साधयन्ति । तथाहि–"विज्ञप्तिमात्रमेवेदम् असदर्थावभासनात् । यथा तैमिरिकस्यासत्केशचन्द्रादिदर्शनम् ॥" [ विज्ञप्तिमात्र० विंशतिका पृ० १] "अत एव सर्वे प्रत्ययाः अनालम्बनाः प्रत्ययत्वात् स्वप्नप्रत्ययवदिति प्रमाणस्य परिशुद्धिः ।" [ प्रमाणवार्तिकालं० पृ० २२ ]

30 तुलना–"विप्लुताक्षा यथा बुद्धिः वितथप्रतिभासिनी । तथा सर्वत्र किन्नेति जडाः सम्प्रतिपेदिरे ॥ सर्वज्ञानानां स्वयमविषयीकृतानां निर्विषयतासिद्धिः इष्टविघातकृत् विरुद्धः स्याद्वादलंघने ।" [ सिद्धिवि० पृ० ३३७ ]

**पृ० ३६. पं० १६. 'प्रमाणमात्मसात्कुर्वन्'**–"तदुक्तं न्यायविनिश्चये–प्रमाणमात्मसात्कुर्वन्' इत्यादि ।" [ सिद्धिवि० टी० पृ० २६८ B. ] प्रमाणसं० पृ० १०३।

35 **पृ० ३६. पं० २८. 'इन्द्रजालादिषु'**–"तथा चोक्तमकलंकदेवैः– इन्द्रजालादिषु..." [ आप्तप० पृ० ४९ ] सिद्धिवि० टी० पृ० २०८ B.

पृ० ३७. पं० १. 'तत्र शौद्धोदनेरेव'—"तदुक्तं न्यायविनिश्चये-तत्र शौद्धोदनेरेव...तत्राद्यापि जडासक्तास्तमसा..." [अष्टसह० पृ० ११६]

तुलना—"शौद्धोदनेरेव प्रज्ञापराधोऽयं लोकातिक्रान्तः कथं बभूवेत्यतिविस्मयमास्महे। तन्मन्ये (तमन्ये) पुनरद्यापि कीर्त्तयन्तीति किं बत परमन्यत्र मोहनीयप्रकृतेः।" [अष्टश०, अष्टसह० पृ० ११६] "कथञ्चिद् याथात्म्यप्रतिपत्तिमन्तरेण यथादर्शनमेवेत्यादि ब्रुवतः क्षणिकभ्रान्तैकान्तचित्तसन्तानान्तराणि स्वभावनैरात्म्यं वा ब्रुवतः शौद्धोदनेः तावदयं प्रज्ञापराधः कथमिति सविस्मयं सकरुणं नश्चेतः। सन्त्यस्यापि अनुवक्तार इति किमन्यदनात्मज्ञतायाः।" [सिद्धिवि० पृ० ७४] "आचार्यस्तस्यैव तावदिदमीदृशं प्रज्ञास्खलितं कथं वृत्तमिति सविस्मयानुकम्पन्नश्चेतः। तदपरेऽप्यनुवदन्तीति निर्दयाक्रान्तभुवनं दिग्व्यापकं तमः।" [वादन्यायटी० पृ० ५१]

पृ० ३७. पं० ६. 'विभ्रमे विभ्रमे'—तुलना—"भ्रान्तावपि यदि भ्रान्तिः भ्रान्तिरेव विशीर्यते। भ्रान्तावभ्रान्ततावित्तौ भ्रान्तिः सेति प्रतीयते॥" [प्रमाणवार्तिकालं० लि०पृ०३०३]

"तदुक्तं न्यायविनिश्चये-विभ्रमे..." [सिद्धिवि० टी० पृ० ६२A.] अष्टसह०पृ०११६। "सर्वथा विभ्रमे तस्य..." [प्रमाणसं० पृ० १०६]

पृ० ३८. पं० ३. 'परितुष्यति'—अत्रायं पूर्वपक्षः—"मणिप्रदीपप्रभयोः मणिबुद्ध्याभिधावतोः। मिथ्याज्ञानाविशेषेऽपि विशेषोऽर्थक्रियां प्रति॥" [प्रमाणवा० ३।५७]

पृ० ४०. पं० ६८. 'विज्ञप्तिर्वितथा'—पूर्वपक्षः—"यथा [स्वप्न] त्ययापेक्षादविद्योपप्लुतात्मनाम्। विज्ञप्तिर्वितथाकारा जायते तिमिरादिवत्॥ असंविदिततत्त्वा च सा सर्वापरदर्शनैः।" [प्रमाणवा० ३।२१७]

पृ० ४१. पं० ६. 'सहोपलम्भ'—विज्ञानवादिनः अर्थसंविदोः सहोपलम्भनियमादभेदं साधयन्ति। तथाहि—"सकृत्संवेद्यमानस्य नियमेन धिया सह। विषयस्य ततोऽन्यत्वं केनाकारेण सिद्ध्यति॥ विषयस्य हि नीलादेर्धिया सह सकृदेव संवेदनम्। धिया सह न पृथक्। ततः संवेदनादपरो विषय इति कथम्?" [प्रमाणवार्त्तिकालं० पृ० ९१] "यद् यस्मादपृथक् संवेदनमेव तत्तस्मादभिन्नं यथा नीलधीः स्वस्वभावात्। यथा वा तैमिरिकज्ञानप्रतिभासी द्वितीय उडुपः–चन्द्रमाः। नीलधीवेदनञ्चेदम् इति पक्षधर्मोपसंहारः। धर्म्यत्र नीलाकारतद्धियौ, तयोरभिन्नत्वं साध्यधर्मः, यथोक्तः सहोपलम्भनियमो हेतुः। ईदृश एवाचार्यीये प्रयोगे हेत्वर्थोऽभिप्रेतः।" [तत्त्वसं० पं० पृ० ५६७]

तुलना—"सहोपलम्भनियमात् स्याद्भेदो नीलतद्धियोः। असहानुपलम्भश्चेत् असिद्धः पृथगीक्षणात्॥ सहोपलम्भनियमादभेदैकान्तसाधने न कश्चिद्भ्रान्तिज्ञानं स्यात् सुषुप्तवत् भ्रान्तिप्रत्यक्षयोः तेन तदेकान्तः, भ्रान्तिविविक्तप्रत्यक्षस्वभावोपपत्तेः। बहिरन्तश्च नीलतद्धियोर्दर्शनात् कुतः सहोपलम्भनियमः सिद्धः? सकृदेकार्थोपनिबद्धदृष्टीनां परज्ञानानुपलम्भेऽपि तदर्थदर्शनात् कुतो नियमः? तदेकक्षणवर्तिनां सहोपलम्भनियमात् स्वयं वा उत्पत्तेः सकलजगदेकसन्तानं प्रसज्येत। यदि पुनरेकज्ञानोपलम्भनियमः; असिद्धो हेतुः अनैकान्तिकश्च, नीलस्य अनेकज्ञानोपलम्भवत् बहूनामपि द्रव्याणामेकज्ञानोपलम्भाप्रतिषेधात्। यद्यसहानुपलम्भः; को विशेषः? प्रसज्यप्रतिषेधमात्रमसाध्यसाधनम् सस्येव (?) अर्थादर्थगतिलक्षणात्।" [सिद्धिवि० पृ० ३३३-३३६] प्रमाणसं० पृ० १०९।

"तत्र भदन्तशुभगुप्तस्त्वाह—विरुद्धोऽयं हेतुः यस्मात् सहशब्दशब्दश्च लोकेऽन्यो (स्या)

ऽवान्येन विना कचित्। विरुद्धोऽयं ततो हेतुर्यद्यस्ति सहवेदनम् ॥'''पुनः स एवाह–यदि सहशब्द एकार्थः तदा हेतुरसिद्धः; तथाहि–नटचन्द्रमल्लप्रेक्षासु न ह्येकेनैवोपलम्भो नीलादेः। नापि नीलतदुपलम्भयोः एकेनैवोपलम्भः। तथाहि–नीलोपलम्भेऽपि तदुपलम्भानामन्यसन्तानगतानामनुपलम्भात्। यदा च सत्त्वं प्राणभृतां सर्वे चित्तक्षणाः सर्वज्ञेनावसीयन्ते तदा कथ-
5 मेकेनैवोपलम्भः सिद्धः स्यात्। किंच, अन्योपलम्भनिषेधे सत्येकोपलम्भनियमः सिद्ध्यति। न चान्योपलम्भप्रतिषेधसंभवः; स्वभावविप्रकृष्टस्य विधिप्रतिषेधायोगात्। अथ सहशब्द एककालविवक्षया; तदा बुद्धविज्ञेयचित्तेन चित्तचैत्तैश्च सर्वथाऽनैकान्तिकता हेतोः। यथा किल बुद्धस्य भगवतो यद्विज्ञेयं सन्तानान्तरचितं तस्य बुद्धज्ञानस्य च सहोपलम्भनियमेऽप्यस्त्येव च नानात्वम्, तथा चित्तचैत्तानां सत्यपि सहोपलम्भे नैकत्वमित्यतोऽनैकान्तिको हेतुरिति।'''स्या-
10 देतत् यद्यपि विपक्षे सत्त्वं न निश्चितं सन्दिग्धं तु ततश्चानैकान्तिको हेतुः सन्दिग्धविपक्षव्यावृत्तिकत्वात्।'''" [ तत्त्वसं० पं० पृ० ५६७–६९ ] शावरभा० बृहतीपं० १।५। शा० भा० भामती २।२।२८। योगसू० तत्त्ववै० ४। १४। न्यायकणि० पृ० २६४। अष्टश०, अष्टसह० पृ० २४२। प्रमेयक० पृ० २१। न्यायकुमु० पृ० १२२। सन्मति० टी० पृ० ३५२। स्या० रत्ना० पृ० १५४।

**पृ० ४१. पं० २२. 'तत्र दिग्भाग'**–तुलना–" षट्केन युगपद्योगात् परमाणोः
15 षडंशता। षण्णां समानदेशत्वात् पिण्डः स्यादणुमात्रकः ॥" [ विज्ञप्ति० विंशिका पृ० ७ ] चतुःशतक पृ० ४८। "यद्वा सर्वात्मना वृत्तौ अनेकत्वं प्रसज्यते। एकदेशेन चानिष्टा नैको वा न कश्चिच्च सः ॥" [ तत्त्वसं० पृ० २०३ ] न्यायकुमु० पृ० २२७।

**पृ० ४१. पं० २७. 'न चैकमेकरागादौ'**–तुलना–"एकस्य चावृतौ सर्वस्यावृतिः स्यादनावृतौ। दृश्येत रक्ते चैकस्मिन् रागोऽरक्तस्य वाऽगतिः ॥" [ प्रमाणवा० २।८५ ] "रक्ते
20 च भाग एकस्मिन् सर्वं रज्येत रक्तवत्। विरुद्धधर्मभावे वा नानात्वमनुषज्यते ॥" [ तत्त्वसं० पृ० १९८ ] अवयविनिरा० पृ० ८७। न्यायकुमु० पृ० २२८।

**पृ० ४२. पं० ५. 'चित्रं तदेकमिति'**–अत्रायं पूर्वपक्षः–"चित्रं तदेकमिति चेदिदं चित्रतरं ततः। नैकस्वभावं चित्रं हि मणिरूपं यथैव तत् ॥" [ प्रमाणवा० ३।२०० ]

तुलना–"तत्र चित्रं भवेदेकमिति'''वेत्सि'''" [ प्रमाणसं० पृ० १०३ ]

25 **पृ० ४३ पं० १८ 'अत्यासन्नानसंसृ'**–पूर्वपक्षः–"अर्थान्तराभिसम्बन्धाज्जायन्ते येऽणवोऽपरे। उक्तास्ते संचितास्ते हि निमित्तं ज्ञानजन्मनः ॥" [ प्रमाणवा ३।१९५ ]

**पृ० ४३. पं० २५. 'कारणस्याक्षये'**–" तदुक्तं न्यायविनिश्चये-कारणस्या'''" [ सिद्धिवि० टी० पृ० ४६ B. ३१४ A. ३४३ A. ]

**पृ० ४३. पं० २६. 'समवायस्य'**–अत्रायं पूर्वपक्षः–अयुतसिद्धानामाधार्याधार-
30 भूतानां यः सम्बन्धः इहप्रत्ययहेतुः स समवायः।'''इह तन्तुषु पटः इह वीरणे कट इह द्रव्ये गुणकर्मणी'''।" [ प्रश० भा० पृ० ६६९ ]

**पृ० ४४. पं० ३. 'शाखा वृक्षेऽपि'**–तुलना–लघी० टि० पृ० १४६ पं० ७।

**पृ० ४४. पं० ६. 'तुलितद्रव्यसंयोगे'**–तुलना–" गुरुत्वाधोगती स्यातां यद्यस्य स्यात्तुलानतिः।" [ प्रमाणवा० ४।१५४ ]

35 **पृ० ४४. पं० ११. 'आसूक्ष्मतः'**–तुलना–" आसूक्ष्माद् द्रव्यमालायास्तौल्यत्वादंशुपातवत्। द्रव्यान्तरगुरुत्वस्य गतिर्नेत्यपरोऽब्रवीत् ॥" [ प्रमाणवा० ४।१५६ ]

**पृ० ४४. पं० १५. 'ताम्रादि'**–तुलना–" तस्य क्रमेण संयुक्ते पांशुराशौ सक्तु-द्युते । भेदः स्याद्गौरवे तस्मात् पृथक् सह च तोलिते ॥ क्रमेण मापकादीनां संख्यासाम्यं न युज्यते । सर्षपादेर्महाराशेरुत्तरोत्तरवृद्धिमत् ॥···" [ प्रमाणवा० ४।१५७-५८ ]

**पृ० ४४. पं० २६. 'गुणपर्ययवद्द्रव्यम्'**–तुलना–" गुणाणमासओ दव्वं एक-दव्वस्सिया गुणा । लक्खणं पज्जवाणं तु उभओ अस्सिया भवे ॥ " [उत्तरा० २८।६] "दव्वं सल्लक्खणियं उप्पादव्वयधुवत्तसंजुत्तं । गुणपज्जयासयं वा जं तं भण्णंति सव्वण्हू ॥ " [ पंचास्ति० गा० १० ] " गुणपर्ययवद् द्रव्यम् " [ तत्त्वार्थसू० ५।३८ ] " तं परियाणहु दव्वु तुहुँ जं गुण-पज्जयजुत्तु । सहभुव जाणहि ताहँ गुण कम-भुव पज्जउ वुत्तु ॥" [ परमात्मप्र० गा० ५७ ] लघी० टि० पृ० १४२ पं० २७ ।

**पृ० ४५. पं० ७. 'भेदज्ञानात्'**–तुलना–" भेदज्ञानात् प्रतीयन्ते यथा भेदाः परिस्फुटम् । तथैवाभेदविज्ञानादभेदस्य व्यवस्थितिः ॥" [ जैनतर्कवा० पृ० ११० ] " तथा चोक्तं न्यायविनिश्चये–भेदज्ञानात्···" [ सिद्धिवि० टी० पृ० १६९ A. ]

**पृ० ४५. पं० ११. 'सदोत्पाद'**–द्रष्टव्यम्–लघी० टि० पृ० १४२ पं० २१ ।

**पृ० ४५. पं० १६. 'प्रत्यक्षप्रतिसंवेद्यः'**–तुलना–" तस्मादुभयहानेन व्यावृत्त्य-नुगमात्मकः । पुरुषोऽभ्युपगन्तव्यः कुण्डलादिषु सर्पवत् ॥" [ मी० श्लो० पृ० ६९५ ] "तदयं भावः स्वभावेषु कुण्डलादिषु सर्पवत् ।" [ प्रमाणसं० पृ० ११२ ]

**पृ० ४५. पं० २४. 'स्वलक्षण'**–तुलना–प्रमाणसं० पृ० १०३ ।

**पृ० ४६. पं० ५. 'तद्भावः'**–तुलना–"तद्भावः परिणामः ।" [तत्त्वार्थसू० ५।४२]

**पृ० ४६. पं० ११. 'भेदानां'**–अत्रायं पूर्वपक्षः–"नैकस्मिन्नसंभवात्" [ब्रह्मसू० २।२।३३] "भेदानां बहुभेदानां तत्रैकस्मिन्नयोगतः ।" [ प्रमाणवा० १।९१ ]

**पृ० ४६. पं० १३. 'अन्वयो'**–तुलना–प्रमाणसं० पृ० १०७ ।

**पृ० ४६. पं० २३. 'उत्पादविगम'**–तुलना–" उत्पादविगमध्रौव्यद्रव्यपर्याय-संग्रहम् । कृत्स्नं श्रीवर्धमानस्य वर्धमानस्य शासनम् ॥ " [ सिद्ध० द्वात्रिं० २०।१ ]

**पृ० ४६. पं० १८. 'नौयानादिषु'**–नौयानादीनि विभ्रमकारणानि । द्रष्टव्यम्–लघी० टि० पृ० १४८ पं० ८ ।

**पृ० ४६. पं० २२. 'तस्माद् दृष्टस्य'**–अत्रायं पूर्वपक्षः–"तस्माद् दृष्टस्य भावस्य दृष्ट एवाखिलो गुणः । भ्रान्त्या न निश्चय इति साधनं सम्प्रवर्त्तते ॥" [ प्रमाणवा० १।४६ ]

**पृ० ४६. पं० २५. 'प्रत्यक्षं कल्पना'**–अत्रायं पूर्वपक्षः–"प्रत्यक्षं कल्पनापोढं प्रत्यक्षेणैव सिद्ध्यति ।" [ प्रमाणवा० ३।१२३ ]

**पृ० ५०. पं० १४. 'अविकल्पक'**–पूर्वपक्षः–"प्रत्यक्षं कल्पनापोढम्···" [प्रमाणसमु० १।३] "यज्ज्ञानमर्थे रूपादौ नामजात्यादिकल्पनारहितं तदक्षमक्षं प्रति वर्त्तत इति प्रत्यक्षम् ।" [ न्यायप्रवे० पृ० ७ ] "तत्र कल्पनापोढमभ्रान्तं प्रत्यक्षम् ।" [ न्यायबि० पृ ११ ] तत्त्वसं० पृ० ३६६ । "तत्रायं न्यायमुखग्रन्थः–यज्ज्ञानमर्थरूपादौ विशेषणाभिधायकाभेदोपचारेणाविकल्पकं तदक्षमक्षं प्रति वर्त्तत इति प्रत्यक्षम् ।" [ तत्त्वसं० पं० पृ० ३७२ ]

**पृ० ५०.पं० २३.'मानसम्'**–"तस्मादिन्द्रियविज्ञानानन्तरप्रत्ययोद्भवः। मनः···" [प्रमाणवा० ३।२४३] "स्वविषयानन्तरविषयसहकारिणेन्द्रियज्ञानेन समनन्तरप्रत्ययेन जनितं तत् मनोविज्ञानम्।" [न्यायवि० पृ० १७] "इदमित्यादि यज्ज्ञानमभ्यासात् पुरतः स्थिते। साक्षात्करणतस्तत्तु प्रत्यक्षं मानसं मतम्॥" [प्रमाणवार्तिकालं लि० पृ० ४१०]

5 **पृ० ५१. पं० १६. 'प्रोक्षितम्'**–"प्रोक्षितं-यज्ञादौ मन्त्रादिसंस्कृतं मांसादि।" [शब्दकल्पद्रुमः]

**पृ० ५१. पं० २७. 'चतुःसत्य'**–"चत्वार्यार्यसत्यानि। तद्यथा-दुःखं समुदयो निरोधो मार्गश्चेति।" [धर्मसं० पृ० ५] "सत्यान्युक्तानि चत्वारि दुःखं समुदयस्तथा। निरोधो मार्ग एतेषां यथाभिसमयं क्रमः॥" [अभिधर्मको० ६।२]

10 **पृ० ५१. पं० २६. 'योगिविज्ञानम्'**–"प्रागुक्तं योगिनां ज्ञानं तेषां तद्भावनामयम्। विधूतकल्पनाजालं स्पष्टमेवावभासते॥" [प्रमाणवा० ३।२८१] "भूतार्थभावनाप्रकर्षपर्यन्तजं योगिज्ञानं चेति।" [न्यायवि० पृ० २०] तत्त्वसं० पृ० ३९८।

**पृ० ५२. पं० १. 'श्रोत्रादिवृत्तिः'**–पूर्वपक्षः–"इन्द्रियप्रणालिकया चित्तस्य बाह्यवस्तूपरागात् तद्विषया सामान्यविशेषात्मनोऽर्थस्य विशेषावधारणप्रधाना वृत्तिः प्रत्यक्षम्।"
15 [योगसू० व्यासभा० पृ० २७]

तुलना–"कापिलास्तु श्रोत्रादिवृत्तेः प्रत्यक्षत्वमिच्छन्ति।···" [प्रमाणसमु० पृ० ६४] न्यायवा० पृ० ४३। "वार्षगण्यस्यापि लक्षणमयुक्तमित्याह-श्रोत्रादिवृत्तिरिति।" [न्यायवा० ता० टी० पृ० १५५] न्यायमं० पृ० १००। "श्रोत्रादिवृत्तिः भ्रान्तेऽपि नहि नाम न विद्यते। न च ज्ञानं विना वृत्तिः श्रोत्रादेरुपपद्यते॥" [प्रमाणवार्तिकालं लि० पृ ४४०] तत्त्वोप० लि०
20 पृ० ७७। "श्रोत्रादिवृत्तिरध्यक्षमित्यप्येतेन चिन्तितम्। तस्या विचार्यमाणाया विरोधश्च प्रमाणतः॥" [तत्त्वार्थश्लो० पृ० १८७] नयचक्रवृ० पृ० ७३ A. षड्द० बृह० पृ० ४३। प्रमाणमी० पृ० २४।

**पृ० ५२. पं० ४. 'तथाक्षार्थ'**–पूर्वपक्षः–"इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्।" [न्यायसू० १।४] प्रश० भा० पृ० ५५३।

25 **पृ० ५२. पं० १०. 'लक्षणं'**–तुलना–प्रमाणसं० पृ० ९९। तत्त्वार्थश्लो० पृ० १८४।

**इति प्रथमः प्रत्यक्षप्रस्तावः।**

**पृ० ५२. पं० २१. 'साधनात्'**–तुलना–"साध्याविनाभुवो लिंगात् साध्यनिश्चायकं स्मृतम्। अनुमानं तदभ्रान्तं प्रमाणत्वात् समक्षवत्॥" [न्यायाव० श्लो० ५] लघी० का० १२। "साधनात्साध्यविज्ञानमनुमानं विदुर्बुधाः। प्रधानगुणभावेन विधानप्रतिषेधयोः॥"
30 [तत्त्वार्थश्लो० पृ० १०७] प्रमाणप० पृ० ७०। परीक्षामु० ३।१४। प्रमाणनय० ३।९। प्रमाणमी० १।२।७। न्यायदी० पृ० २०। जैनतर्कभा० पृ० १२।

**पृ० ५३. पं० २. 'साध्यं'**–"एवं हि यैरुक्तम्–साध्यं···" [तत्त्वार्थश्लो० पृ० २१४, १९७] "तदुक्तमकलंकदेवैः–साध्यं···" [प्रमाणप० पृ० ७२] "···साध्याभासं यथा सत्ता भ्रान्तेः पुरुषधर्मतः।" [प्रमाणसं० पृ० १०२] प्रमाणनि० पृ० ६१। "तदुक्तं न्यायविनि-
35 श्चये–साध्यं···" [न्यायदी० पृ० २१]

तुलना-"पक्षः प्रसिद्धो धर्मी, प्रसिद्धविशेषेण विशिष्टतया स्वयं साध्यत्वेनेप्सितः, प्रत्यक्षाद्यविरुद्ध इति वाक्यशेषः ।" [ न्यायप्रवे० पृ० १ ] "साध्याभ्युपगमः पक्षः प्रत्यक्षाद्यनिराकृतः ।" [ न्यायाव० श्लो० १४ ] "स्वरूपेणैव स्वयमिष्टोऽनिराकृतः पक्षः इति ।" [ न्यायबि० पृ० ७९ ] "इष्टमबाधितमसिद्धं साध्यम् ।" [ परीक्षामु० ३।१५ ] "अप्रतीतमनिराकृतमभीप्सितं साध्यम् ।" [ प्रमाणनय० ३।१२ ] जैनतर्कभा० पृ० १३ । "सिसाधयिषितमसिद्धमबाध्यं साध्यं पक्षः ।" [ प्रमाणमी० १।२।१३ ] 5

**पृ० ५३. पं० १५. 'भ्रान्तेः'**-तुलना-"भ्रान्तेः पुरुषधर्मत्वात्" [ न्यायवा० पृ० २० ] प्रमाणसं० पृ० १०२ ।

**पृ० ५४. पं० ७. 'व्याधिभूत'**-तुलना-"व्याधिभूतग्रहेन्द्रियप्रवृत्तिनिवृत्त्योः मन्त्रौषधादिशक्तेश्च कुतः सिद्धिः ?" [ सिद्धिवि० पृ० ३४९ A. ] 10

**पृ० ५७. पं० १४. 'नो चेद्विभ्रम'**-तुलना-"नो चेद् भ्रान्तिनिमित्तेन संयोज्येत गुणान्तरम् ।" [ प्रमाणवा० १।४५ ]

**पृ० ५९. पं० २. 'मेचकादिवत्'**-तुलना-"यथा कल्माषवर्णस्य यथेष्टं वर्णनिग्रहः । चित्रत्वाद्वस्तुनोऽप्येवं भेदाभेदावधारणम् ।। यदा तु शबलं वस्तु युगपत्प्रतिपद्यते । तदान्यानन्यभेदादि सर्वमेव प्रलीयते ।।" [ मी० श्लो० पृ० ५६१ ] नरसिंहमेचकवद् वस्तुनो 15 जात्यन्तरात्मकत्वाभ्युपगमात् ।" [ अनेकान्तजय० पृ० २८१ ]

**पृ० ५९. पं० १६. 'प्रत्यभिज्ञा'**-"प्रत्यभिज्ञा द्विधा इत्यादिवचनात् ।" [ सिद्धिवि० टी० पृ० १७८ B. ]

**पृ० ६२. पं० ३. अप्रत्यक्षेऽपि'**-"अप्रत्यक्षेऽपि...तद्गुणो ज्ञानं नो जातिस्मरदर्शनात् ।" [ प्रमाणसं० पृ० १०७ ] 20

**पृ० ६२. पं० २८. 'विकृतेरविकारिणी'**-तुलना-"प्रसुप्तिकाद्यवस्थासु शरीरविकृतावपि । नान्यथात्वं मनोबुद्धेस्तस्मान्नेयं तदाश्रिता ।।" [तत्त्वसं० का० १९३४ ] "न च यस्य विकारेऽपि यन्न विक्रियते तत्तत्कार्यं युक्तमतिप्रसङ्गात् ।" [ तत्त्वसं० पं० पृ ५२७ ] न्यायकुमु० पृ० ३४६ ।

**पृ० ६२. पं० २९. 'निर्ह्रासा'**-तुलना-"बुद्धिव्यापारभेदेन निर्ह्रासातिशयावपि । 25 प्रज्ञादेर्भवतो देहनिर्ह्रासातिशयैर्विना ।।" [ प्रमाणवा० २।७३ ]

**पृ० ६३. पं० २४. 'जातिस्मराणां'**-तुलना-"जाइस्सरो न विगओ सरणाओ बालजाइसरणोव्व । जह वा सदेसवत्तं नरो सरंतो विदेसम्मि ।।" [ विशेषा० गा० २१५० ] "जाईसरणं च इहं दीसई केसिंचि अवितहं लोए । पुव्वभवणवियसेवियसंवादातो अणेगभवं ।।" [ धर्मसंग्र० गा० १४६ ] "नात्मापि लोके नोऽसिद्धो जातिस्मरणसंश्रयात् ।" [शास्त्रवा० १।४०] 30

**पृ० ६३. पं० २८. 'नास्मृतेऽभिलाषो'**-"न स्मृतेरभिला......इत्यकलंकवचनम्...।" [ तत्त्वार्थश्लो० पृ० ३२९ ]

**पृ० ६३. पं० ३१. 'जातमात्रेऽपि'**-तुलना-"पूर्वानुभूतस्मृत्यनुबन्धात् जातस्य हर्षभयशोकसम्प्रतिपत्तेः ।' [ न्यायभा० ३।१।१९ ] न्यायमं० पृ० ४७० । तत्त्वसं० पं० पृ० ५३२ । "पढमो थणाहिलासो अण्णाहाराहिलासपुव्वोऽयं । जह बालहिलासपुव्वो जुवाहिलासो य 35

देहहिओ ॥" [विशेषा० गा०२१४०] "जो वालथणभिलासो पढमो अहिलासपुव्वगो सोवि। अहिलासत्ता जूणो जह विलयाहारअहिलासो ॥" [ धर्मसंग्र० गा० १४५ ]

पृ० ६४. पं० १५. 'तथा रागादयो'–तुलना–"रागद्वेषादयश्चामी पटवोऽभ्यासयोगतः। अन्वयव्यतिरेकाभ्यां भवन्तः परिनिश्चिताः ॥" [ तत्त्वसं० पृ० ५४६ ]

5 पृ० ६६. पं० २. 'न चेतस'–तुलना–"तदुक्तम्–स्वतोऽन्यतो वा विवर्त्तेत क्रमाद्धेतुफलात्मना।" [ सिद्धिवि० टी० पृ० ३५१ A. ]

पृ० ६६. पं० २०. 'साधनं'–तुलना–प्रमाणसं० पृ० १०२। "अन्यथानुपपत्त्येकलक्षणं तत्र साधनम् ॥" [ तत्त्वार्थश्लो० पृ० २१४ ] परीक्षामु० ३।१५। "तथा चाभ्यधायि कुमारनन्दिभट्टारकैः–अन्यथानुपपत्त्येकलक्षणं लिंगमंग्यते। प्रयोगपरिपाटी तु प्रतिपाद्यानु-
10 रोधतः ॥" [ प्रमाणप० पृ० ७२ ]

पृ० ६६. पं० २३. 'विरुद्धासिद्ध'–तुलना–"हेत्वाभासा असिद्धविरुद्धानैकान्तिकाकिञ्चित्कराः।" [ परीक्षामु० ६।२१ ]

पृ० ६७. पं० १. 'एकं चलं'–तुलना–"एकं·· आवृतैरावृतं रूपं रक्तं रक्ते···" [ प्रमाणसं० पृ० १०२ ]

15 पृ० ६८. पं० २७. 'रूपादीनि'–तुलना–"नीलादीनि निरस्यान्यच्चित्रं चित्रं यदीक्षसे।" [ प्रमाणवा० ३।२०२ ]

पृ० ७३. पं० २७. 'शिलाप्लवः'–तुलना–"स्वलक्षणानि परिस्फुटम् अक्षबुद्धौ प्रतिभासन्ते इति शिलाप्लवं कः श्रद्दधीत ?" [ सिद्धिवि० पृ० १२५ B. ]

पृ० ७४. पं० १. 'अन्यथानुपपन्न'–श्लोकोऽयं सिद्धिविनिश्चयेऽपि विद्यते। तट्टी-
20 काकृता चायं पात्रस्वामिकर्तृकत्वसमालोचनपुरस्सरं भगवत्सीमन्धरस्वामिकर्तृकतया निर्दिष्टः। [ सिद्धिवि० टी० पृ० ३०० A. ] न्यायविनिश्चयविवरणे आराधनाकथाकोशे च अस्य पद्मावतीदेव्या भगवत्सीमन्धरस्वामिसकाशादानीय पात्रस्वामिने समर्पणञ्च समुल्लिखितम्। श्लोकोऽयं तत्त्वार्थश्लोकवार्त्तिके वार्त्तिककार ( राजवार्त्तिककार ) कर्तृकतया तत्त्वसंग्रहादिषु च पात्रस्वामिप्रणेतृकतया समुद्धृतः। तथाहि–

25 "तथाह च–अन्यथानुपपन्न···" [तत्त्वार्थश्लो० पृ० २०३] "हेतुलक्षणं वार्तिककारेणैवमुक्तम्– अन्यथानुपपन्नत्वं यत्र तत्र त्रयेण किम्। इति।" [तत्त्वार्थश्लो० पृ० २०५] प्रमाणप० पृ० ७२। जैनतर्कवा० पृ० १३५। सूत्रकृतांगटी० पृ० २२५। प्रमाणमी० पृ० ४०। "अन्यथेत्यादिना पात्रस्वामिमतमाशङ्कते–अन्यथानुपपन्नत्वे ननु दृष्टा सुहेतुता। नासति त्र्यंशकस्यापि तस्मात्क्लीबास्त्रिलक्षणाः ॥ ···नान्यथानुपपन्नत्वं यत्र तत्र···अन्यथानुपपन्नत्वं···" [तत्त्वसं०पृ०४०६]
30 "तदुक्तं जैनैः–अन्यथानुपपन्नत्वं···" [ सन्मति० टी० पृ० ५६० ] न्यायदी० पृ० ३२। "तदुक्तं पात्रस्वामिना–अन्यथानुप···" [ स्या० रत्ना० पृ० ५२१ ]

तुलना–"अन्यथाऽसम्भवो ज्ञातो यत्र तत्र त्रयेण किम्।" [ प्रमाणसं० पृ० १०४ ]

पृ० ७५. पं० २४. 'तुलोन्नाम'–तुलना–"तुलोन्नाम·· तादात्म्यं सहचारतः।" [ प्रमाणसं० पृ० १०७ ] "परस्पराविनाभूतौ नामोन्नामौ तुलान्तयोः।" [ सिद्धिवि० पृ० ३१५ A. ]

पृ० ७५. पं० २९. 'चन्द्रार्वाक्परभागयोः'–तुलना–"तदेतस्मिन् प्रतिबन्धनियमे कथं चन्द्रादेरर्वाग्भागदर्शनात् परभागोऽनुमीयेत नानयोः कार्यकारणभावः सहैव भावात्। न च तादात्म्यलक्षणो भेदात्।" [सिद्धिवि० पृ० ३०६ B.]

पृ० ७६. पं० ७. 'एतेन पूर्ववत्'–अत्रायं पूर्वपक्षः–"अथ तत्पूर्वकं त्रिविधमनुमानं पूर्ववत् शेषवत् सामान्यतोदृष्टं च।" [न्यायसू० १।१।५] 5

पृ० ७६. पं० ७. 'वीत'–पूर्वपक्षः–"तत्र प्रथमं तावत् द्विविधं वीतमवीतं च। तत्र अन्वयमुखेन प्रवर्त्तमानं विधायकं वीतम्। व्यतिरेकमुखेन प्रवर्त्तमानं निषेधकमवीतम्। तत्र अवीतं शेषवत्। वीतं द्वेधा पूर्ववत्, सामान्यतोदृष्टञ्च।·· " सांख्यतत्त्वकौ० पृ० ३०।

पृ० ७६. पं० ७. 'संयोग्यादौ'–पूर्वपक्षः–"अस्येदं कार्यं कारणं संयोगि विरोधि समवायि चेति लैङ्गिकम्।" [वैशे० सू० ९।२।१] 10

पृ० ७६. पं० १०. 'अन्यथानुपपन्नत्व'–तुलना–"अन्यथानुपपन्नत्वं हेतोर्लक्षणमीरितम्। तदप्रतीतिसन्देहविपर्यासैस्तदाभता॥" [न्यायाव० श्लो० २२]

पृ० ७६. पं० १८. 'निर्व्यापारो'–तुलना–प्रमाणसं० पृ० १०७।

पृ० ७६. पं० २८. 'सत्त्वमर्थे'–तुलना–"अन्यथा निश्चितं सत्त्वं विरुद्धमचलात्मनि।" [प्रमाणसं० पृ० १०७] 15

पृ० ७६. पं० ३१. 'सर्वज्ञप्रतिषेधे'–तुलना–"सर्वज्ञवीतरागयोर्विप्रकर्षाद्वचनादेस्तत्र सत्त्वमसत्त्वं वा सन्दिग्धम्, अनयोरेव द्वयो रूपयोः सन्देहेऽनैकान्तिकः।" [न्यायबि० पृ० १०५] "वक्त्रादेर्दोषसंक्षयो नेत्येके व्यतिरेकोऽस्य सन्दिग्धो व्यभिचार्यतः॥" [प्रमाणवा० २।१४२] परीक्षामु० ६।३३। प्रमाणनय० ६।५७।

पृ० ७८. पं० २२. 'परदुःखपरिज्ञानात्'–तुलना–"सर्ववेदने तु परसन्तानरागादिवेदने रागादिमत्त्वमिति न सत्; तथाहि–परसन्तानसंवित्तौ वीतरागित्ववेदने। तस्य रागित्वमप्यस्तीत्येतदत्यन्तदुर्घटम्॥ यदैवासौ रागी पररागवेदने तथा परवीतरागवेदने वीतरागोऽपि। उभयमपि तदैवेति चेन्न; एकेनाप्यनुभूतत्वाभावे रागी कथं मतः। तटस्थस्य हि संवित्तौ न रागित्वादिसंभवः॥ तथाहि–न घटवेदने घटीभवति। एवं रागादयोऽपि परसन्तानान्तर्गतास्तटस्थतया अवगम्यमाना न रागित्वं निर्वर्त्तयन्ति।" [प्रमाणवार्तिकालं० लि० पृ० ४३४] 20 25

पृ० ७८. पं० ३०. 'असिद्धश्चाक्षु'–तुलना–"तत्र शब्दानित्यत्वे साध्ये चाक्षुषत्वादित्युभयासिद्धः।" [न्यायप्रवे० पृ० ३] "अविद्यमानसत्ताकः परिणामी शब्दः चाक्षुषत्वात्।" [परीक्षामु० ६।२३।] प्रमाणनय० ६।५०।

पृ० ७९. पं० ३. 'विरुद्धा'–"एकलक्षणमाहात्म्याद्धेत्वाभासा निवर्तिताः। विरुद्धानैकान्तिकासिद्धाज्ञाताकिञ्चित्करादयः॥ अन्यथानुपपत्त्या निर्णीतो हेतुः। अन्यथैवोपपत्त्या विरुद्धः। अन्यथा वोपपत्त्याऽनैकान्तिकः। तथा अन्यथा च सम्भूष्णुरसिद्धः। अज्ञाने पुनरज्ञातोऽकिञ्चित्करः तथैव। न ह्येकलक्षणाभावे त्रिलक्षणं गमकम्। अनुपलब्धस्तावच्चित्रा निश्चेतुमशक्यैव।" [सिद्धिवि० पृ० ३४३-४४] 30

पृ० ७९. पं० २७. 'तत्र मिथ्योत्तरं'–तुलना–"दूषणाभासास्तु जातयः।"

[ न्यायवि० पृ० १३३ ] न्यायप्रवे० पृ० ९ । प्रमाणमी० २।१।२९ । "अस्तु मिथ्योत्तरं जातिरकलङ्काकलक्षणा ।" [ तत्त्वार्थश्लो० पृ० ३०९,३१० ]

**पृ० ७९. पं० ३०. 'दध्युष्ट्रादेः'**–पूर्वपक्षः–"सर्वस्योभयरूपत्वे तद्विशेषनिराकृतेः । चोदितो दधि खादेति किमुष्ट्रं नाभिधावति ।" [ प्रमाणवा० १।१८३ ]

5 **पृ० ८०. पं० २. 'विदूषकः'**–तुलना–"मिथ्यार्थाभास्थिरज्ञानचित्रसन्तानसाधकः। तत्त्वज्ञानगिराङ्गं (?) दूषकस्त्वं विदूषकः ॥" [ सिद्धिवि० पृ० ३३० B. ]

**पृ० ८०. पं० १५. 'साधर्म्यादिसमत्वेन'**–"साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुपपत्तिसंशयप्रकरणहेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्यसमाः ।" [ न्यायसू० ५।१।१ ]

10 वादविधि-प्रमाणसमुच्चय-न्यायमुख-तर्कशास्त्रोपायहृदयादिषु साधर्म्यादिसमानां जातीनां वर्णनमस्ति । द्रष्टव्यम्–प्रमाणमी० भाषाटि० पृ० ११३ । न्यायकुमु० टि० पृ० ३२३ ।

**पृ० ८०. पं० १५. 'नेह प्रतन्यते'**–तुलना–"छलजातिनिग्रहस्थानभेदलक्षणं नेह प्रतन्यते विस्तरभयात् अन्यत्र तद् द्रष्टव्यम् ।" [ सिद्धिवि० पृ० २५६ B. ]

**पृ० ८०. पं० २०. 'असाधनाङ्ग'**–पूर्वपक्षः–"असाधनाङ्गवचनमदोषोद्भावनं

15 द्वयोः । निग्रहस्थानमन्यत्तु न युक्तमिति नेष्यते ॥" [ वादन्याय पृ० २ ]

तुलना–"असाधनाङ्गवचनमदोषोद्भावनं द्वयोः । निग्रहस्थानमिष्टं चेत् किं पुनः साध्यसाधनैः ॥" [ सिद्धिवि० पृ० २७२ A. ] तत्त्वार्थश्लो० पृ० २८१ । प्रमेयक० पृ० २०३ A. प्रमाणमी० २।१।३५ ।

**पृ० ८०. पं० २८. 'दृष्टान्तः'**–तुलना–"साध्यसाधनयोर्व्याप्तिर्यत्र निश्चीयते

20 तराम् । साधर्म्येण स दृष्टान्तः सम्बन्धस्मरणान्मतः ॥ साध्ये निवर्तमाने तु साधनस्याप्यसंभवः । ख्याप्यते यत्र दृष्टान्ते वैधर्म्येणेति स स्मृतः ॥" [ न्यायाव० श्लो० १८–१९ ] परीक्षामु० ३।४७–४९ । प्रमाणनय० ३।४०–४४ ।

**पृ० ८०. पं० २८. 'तदाभासाः'**–तुलना–"साधर्म्येणात्र दृष्टान्तदोषा न्यायविदीरिताः। अपलक्षणहेतूत्थाः साध्यादिविकलादयः॥" [ न्यायाव० श्लो० २४ ] परीक्षामु० ६।

25 ४०–४५ । प्रमाणनय० ६।५८–७९ । प्रमाणमी० २।१।२२–२७ ।

**पृ० ८१. पं० ३. 'वादः'**–तुलना–"विरुद्धयो धर्मयोरेकधर्मव्यवच्छेदेन स्वीकृततदन्यधर्मव्यवस्थापनार्थं साधनदूषणवचनं वादः ।" [ प्रमाणनय० ८।१ ] प्रमाणमी० २।१।३० ।

**पृ० ८१. पं० ५. 'आस्तां तावद्'**–उद्धृतेयं कारिका–तत्त्वार्थश्लो० पृ० २७९ ।

**पृ० ८१. पं० ८. 'वितण्डादिः'**–"यथोक्तोपपन्नः छलजातिनिग्रहस्थानसाध-

30 नोपालम्भो जल्पः । स प्रतिपक्षस्थापनाहीनो वितण्डा ।" [ न्यायसू० १।२।१,२ ]

**पृ० ८१. पं० १२. 'प्रामाण्यं यदि'**–श्लोकोऽयं प्रमाणसंग्रहेऽपि (पृ० १२७) विद्यते।

**इति द्वितीय अनुमानप्रस्तावः ।**

पृ० ८१. पं० २७. 'सिद्धं प्रवचनं'—तुलना—"कृत्स्नं श्रीवर्धमानस्य वर्धमानस्य शासनम्।" [ सिद्ध० द्वात्रिं० २१।१ ] प्रमाणसं० पृ० ११६।

पृ० ८२. पं० ५. 'पुरुषातिशयो'—पूर्वपक्षः—"पुरुषातिशयापेक्षं यथार्थमपरे विदुः। इष्टोऽयमर्थः [ प्रत्येतुं शक्यः ] सोऽतिशयो यदि॥ अयमेवं नवेत्यन्यदोषा निर्दोषतापि वा। दुर्लभत्वात् प्रमाणानां दुर्बोधेत्यपरे विदुः॥" [ प्रमाणवा० १।२२०-२१ ] 5

तुलना—"पुरुषातिशयोऽज्ञेयो विप्रलम्भी किमिष्यते॥" [ प्रमाणसं० पृ० ११६ ] "विप्रलम्भशङ्कानुबन्धात् इत्यधिकारिकारिकां विप्रलम्भो वचनं तस्याशङ्का तस्या अनुबन्धात् कारणात् पुरुषातिशयः किमिष्यते? नेष्टव्य इत्यर्थः...तदनुबन्धिकारणं दर्शयन्नाह—चेष्टते व्याप्रियते वेद्यादि यथाकृतम्, क इत्याह—वीतदोषो वीतरागः, क इव दोषवदिति। दूषणान्तरमाह पुरुषातिशयः सन्नपि ज्ञातु यद्यशक्यः किमिष्यते? [ सिद्धिवि० टी० पृ० ३९३ B. ] 10

पृ० ८२. पं० १२. 'सिद्धहिंसा'—तुलना—"प्रसिद्धहिंसानृतस्तेयाब्रह्मपरिग्रहस्वविपक्षगुणोत्कर्षमाशंसमानः यथार्थदर्शनादिगुणो नेति निःशङ्कं नश्चेतः।" [प्रमाणसं० पृ० ११६]

पृ० ८२. पं० १५. 'हेयोपादेयतत्त्वस्य'—पूर्वपक्षः—"हेयोपादेयतत्त्वस्य सोपायस्य प्रसिद्धितः। प्रधानार्थाविसंवादनुमानम्परत्र वा॥" [ प्रमाणवा० १।२१९ ]

पृ० ८२. पं० २८. 'भावनापरिपाकतः'—पूर्वपक्षः—"तस्माद् भूतमभूतं वा यद् यदेवाभिभाव्यते। भावनापरिनिष्पत्तौ तत्स्फुटाकल्पधीफलम्॥" [ प्रमाणवा० ३।२८५ ] "भूतार्थभावनाप्रकर्षपर्यन्तजं योगिज्ञानम्" [ न्यायबि० पृ० २० ] "किंच, ये ये विभाव्यन्ते ते ते भान्ति परिस्फुटम्। भावनापरिनिष्पत्तौ कामादिविषया इव॥ ...भूतार्थभावनोद्भूतेः प्रमाणं तेन तन्मतम्।" [ तत्त्वसं० पृ० ८९६ ] 15

तुलना—"चतुःसत्यभावनोपायं निर्वाणं सकलं कथम् मिथ्याज्ञानतः तत्त्वप्रतिपत्तिः। कथमतत्त्वभावनाप्रकर्षपर्यन्तजं तत्त्वज्ञानञ्च। मिथ्यैकान्ताविशेषे नैरात्म्येतरपक्षयोः न कश्चिद्विशेषः।" [ सिद्धिवि० पृ० ३५४-५५] "यदि पुनः चिन्तामयीमेव प्रज्ञामनुशीलयतां विभ्रमविवेकनिर्मलमनःप्राप्तिः निर्वाणम्, तच्च कथम् अतत्त्वभावनातः, मिथ्याभावनायां तत्त्वज्ञानं कामशोकभयोन्मादादिवत्।" [ सिद्धिवि० पृ० ३८७ ] 20

पृ० ८३. पं० ३. 'निरुपद्रवभूतस्य'—तुलना—"निरुपद्रवभूतार्थस्वभावस्य विपर्ययैः। न बाधा यत्नवत्त्वेऽपि बुद्धेस्तत्पक्षपाततः॥" [ प्रमाणवा० १।२२३, २।२१० ] 25

पृ० ८३. पं० ९. 'यस्तावत् करुणा'—तुलना—लघी० टि० पृ० १३१ पं० १२।

पृ० ८३. पं० १०. 'सन्तानः'—तुलना—लघी० टि० पृ० १३१ पं० ३।

पृ० ८३. पं० २४. 'विश्वलोकाधिक'—पूर्वपक्षः—'सर्वदा चापि पुरुषाः प्रायेणानृतवादिनः। यथाऽद्यत्वे न विस्रम्भस्तथाऽतीतार्थकीर्तने॥" [ मी० श्लो० पृ० ८८ ] "ज्ञानवान् मृग्यते कश्चित्तदुक्तप्रतिपत्तये। अज्ञोपदेशकरणे विप्रलम्भनशङ्किभिः॥ तस्मादनुष्ठेयगतं ज्ञानमस्य विचार्यताम्। कीटसंख्यापरिज्ञाने तस्य नाक्वोऽपि युज्यते॥" [ प्रमाणवा० २।३०, ३१ ] 30

पृ० ८४. पं० ६. 'सकलज्ञस्य'—तुलना—"सर्वादृष्टिश्च सन्दिग्धा स्वादृष्टिर्व्यभिचारिणी। विन्ध्याद्रिरन्ध्रदूर्वादेरदृष्टावपि सत्त्वतः॥" [ तत्त्वसं० पृ० ६५ ] प्रमाणसं० पृ० १००। तत्त्वार्थश्लो० पृ० १३, १४। "सर्वादृष्टेश्च सन्देहात् स्वादृष्टेर्व्यभिचारतः॥" 35

[आत्मतत्त्ववि० पृ० ९४] "यथोक्तम्–सर्वादृष्टिश्च सन्दिग्धा स्वादृष्टिर्व्यभिचारिणी। खलबिलान्तर्गतस्यापि बीजस्य सत्त्वदर्शनात् ॥" [ तर्कभा० मो० लि० पृ० २२ ]

**पृ० ८४. पं० १४. 'स्वप्नेक्षणिकादेर्वा'**–तुलना–"स्वप्ने च मानसं ज्ञानं सर्वार्थानुभवात्मकम्। (पृ० ८८६) ......अतीन्द्रियार्थविज्ञानयोगो नाप्युपलभ्यते। प्रज्ञादिगुणयोगित्वं पुंसां विद्यादिशक्तितः ॥ अस्ति हीक्षणिकाद्याख्या विद्या या सुविभाविता। परचित्तपरिज्ञानं करोतीहैव जन्मनि ॥ आदिशब्देन गान्धारीप्रभृतीनां ग्रहणम्।" [ तत्त्वसं० पृ० ८८८ ]

**पृ० ८४. पं० १४. 'ज्ञानावृत्तिविवेकतः'**–तुलना–"एवं क्लेशावरणप्रहाणं प्रसाध्य ज्ञेयावरणप्रहाणं प्रतिपादयन्नाह–साक्षात्कृतिविशेषाच्च दोषो नास्ति सवासनः। सर्वज्ञत्वमतः सिद्धं सर्वावरणमुक्तितः ॥" [ तत्त्वसं० पृ० ८७५ ]

**पृ० ८५. पं० २. 'एवं यत्केवलज्ञानं'**–पूर्वपक्षः–"एवं यैः केवलज्ञानमिन्द्रियाद्यनपेक्षिणः। सूक्ष्मातीतादिविषयं जीवस्य परिकल्पितम् ॥ नर्ते तदागमात् सिद्ध्येन्न च तेनागमो विना।" [ मी० श्लो० पृ० ८७ ]

**पृ० ८५. पं० १५. 'ग्रहादिगतयः'**–तुलना–"धीरत्यन्तपरोक्षेऽर्थे न चेत् पुंसां कुतः पुनः। ज्योतिर्ज्ञानाविसंवादः श्रुताच्चेत् साधनान्तरम् ॥" [ सिद्धिवि० पृ० ४१३ A. ] चन्द्रसूर्योपरागादेस्ततः संवाददर्शनात्। अप्रत्यक्षेऽपि पापादौ न प्रामाण्यं न युज्यते ॥" [ शास्त्रवा० २।३ ] प्रमाणमी० पृ० १२।

धर्मकीर्तिना ज्योतिर्ज्ञानोपदेशस्य सर्वज्ञत्वसाधकत्वे सन्दिग्धव्यतिरेकितोक्ता। तथाहि–"सन्दिग्धसाध्यव्यतिरेकमुदाहर्तुमाह–यथाऽसर्वज्ञाः कपिलादयोऽनाप्ता वा अविद्यमानसर्वज्ञताप्ततालिंगभूतप्रमाणातिशयशासनत्वादिति। अत्र वैधर्म्योदाहरणं यः सर्वज्ञ आप्तो वा स ज्योतिर्ज्ञानादिकमुपदिष्टवान् तद्यथा ऋषभवर्धमानादिरिति।" [न्यायबि० पृ० १२६] "तदिह वैधर्म्योदाहरणाद् ऋषभादेरसर्वज्ञत्वस्यानाप्ततायाश्च व्यावृत्तिः सन्दिग्धा। यतो ज्योतिर्ज्ञानं चोपदिशेदसर्वज्ञश्च भवेदनाप्तो वा, कोऽत्र विरोधः ? नैमित्तिकमेतज्ज्ञानं व्यभिचारि न सर्वज्ञत्वमनुमापयेत्।" [ न्यायबि० टी० पृ० १२७ ]

**पृ० ८५. पं० १६. 'सूक्ष्मान्तरित'**–कारिकेयं मूलतः स्वामिसमन्तभद्रोक्ता। तुलना–आप्तमी० का० ५। प्रमाणमी० पृ० १२।"तदुक्तं स्वामिभिः महाभाष्यस्यादावाप्तमीमांसाप्रस्तावे सूक्ष्मान्तरितदूरार्थाः..." [ न्यायदी० पृ० १३ ]

**पृ० ८६. पं० १. 'म्लेच्छादिव्यवहारवत्'**–तुलना–"तस्मादपौरुषेयत्वे स्यादन्योऽपुरुषाश्रयः। म्लेच्छादिव्यवहाराणां नास्तिक्यवचसामपि ॥ अनादित्वाद् भवेदेवं पूर्वसंस्कारसन्ततेः। तादृशेऽपौरुषेयत्वे कः सिद्धेऽपि गुणो भवेत् ॥" [ प्रमाणवा० १।२४७–४८ ] "सिद्धेऽपि तदनादित्वे पौरुषेयत्वाभावे वा कथमविसंवादकत्वं प्रत्येतव्यम्, म्लेच्छादिव्यवहारादेस्तादृशो बहुलमुपलम्भात्।" [ अष्टश०, अष्टसह० पृ० २३८ ] "कर्त्तुरस्मरणेऽपि प्रबन्धानादित्वं स्यान्न पुनः नित्यत्वमेव, तथापि कथं प्रामाण्यं तद्राशेः म्लेच्छव्यवहारवत्।" [ सिद्धिवि० पृ० ४०८ A. ]

**पृ० ८६. पं० ६. 'कालेनैतावता'**–तुलना–प्रमाणसं० पृ० ९८।

**पृ० ८६. पं० २०. 'स्वतन्त्रत्वे तु शब्दानाम्'**–तुलना–"नित्यत्वेऽपि शब्दानां सर्वेषां स्यात् सकृच्छ्रुतिः। समानग्रहयोग्यत्वात् व्यापिनां समवस्थितेः ॥ तत्कृतमुपकारमा-

त्मसात्कुर्वतः तद्देशवृत्तिनियमात् कूटस्थस्य न संभवति । सर्वगतत्वेऽपि विवक्षितैकशब्दश्रुतिर्न स्यात् । न हि समानदेशानां समानाक्षविषयाणामेतन्न्याय्यम् । प्रत्येकं व्यञ्जकनियमे कलकल-श्रुतेरनुपपत्तेः । व्यक्ताव्यक्तस्वभावप्राप्तिपरिहारमन्तरेण कुतो व्यक्तिः । तत्त्यागोपादानमृते कुतस्तिरोधानम् ? सत्यां च व्यञ्जकव्यापृतौ न स्याद्व्यङ्ग्यस्य नियमाद्गतिः, नावश्यम्भावनियमः उच्चारणात् श्रुतेस्ततः ।" [ सिद्धिवि० पृ० ५५४ ]　　5

पृ० ८६. पं० २५. 'नित्यत्वम्'–पूर्वपक्षः–"नित्यस्तु स्याद् दर्शनस्य परार्थत्वात् । नित्यः शब्दो भवितुमर्हति । कुतः ? दर्शनस्य परार्थत्वात् । दर्शनमुच्चारणम् तत्परार्थम् । परमर्थं प्रत्याययितुम् । उच्चरितमात्रे हि विनष्टे शब्दे न चान्योऽन्यानर्थं प्रत्याययितुं शक्नुयात् अतो न परार्थमुच्चार्येत । अथाविनष्टः; ततो बहुश उपलब्धपूर्वत्वादेवार्थाधिगमः इति युक्तम् ।" [ शाबरभा० १।१।१८ ]　　10

पृ० ८६. पं० ३०. 'स एवायमिति'–पूर्वपक्षः–"एवमन्येऽपि प्रत्यभिजानन्ति स एवायमिति । प्रत्यभिजानाना वयमिवान्येपि नान्य इति वक्तुमर्हन्ति । अथ मतम्–अन्यत्वे सति सादृश्येन व्यामूढाः 'सः' इति वक्ष्यन्ति; तन्न; नहि ते सदृश इति प्रतियन्ति, किं तर्हि ? 'स एवायम्' इति ।" [ शाबरभा० १।१।२० ]

पृ० ८८. पं० १४. 'सम्यग्ज्ञानाङ्कुशः'–तुलना–प्रमाणसं० का० ६८ ।　　15

पृ० ८८. पं० २१. 'अहं ममाश्रवो'–तुलना–प्रमाणसं० का० ६९ । "जीवाजीवा-स्रवबन्धसंवरनिर्जरामोक्षास्तत्त्वम् ।" [तत्त्वार्थसू० १।४] "नव सब्भावपयत्था पण्णत्ते । तं जहा– जीवा अजीवा पुण्णं पावो आसवो संवरो णिज्जरा बंधो मोक्खो ।" [ स्थानांगसू० ९।६६५ ]

पृ० ८९. पं० ५. 'सात्मीभावाद्वि'–तुलना–"सर्वेषां सविपक्षत्वान्निर्ह्रासातिश-यश्रिताः । सात्मीभावात्तदभ्यासाद् हीयेरन्नास्रवाः क्वचित् ।।" [ प्रमाणवा० १।२२२ ]　　20

पृ० ८९. पं० १२. 'यद्यप्यनात्मविज्ञान'–पूर्वपक्षः–"तस्मादनादिसन्तानतुल्य-जातीयबीजिकाम् । उत्खातमूलां कुरुत सत्त्वदृष्टिं मुमुक्षवः ।। २५६ ।। तत्रैव तद्विरुद्धात्मत-त्त्वाकारानुबोधिनी । हन्ति सानुचरां तृष्णां सम्यग्दृष्टिः सुभाविता ।। २७१ ।।" [ प्रमाणवा० २।२५६, २७१ ] "अद्वितीयं शिवद्वारं कुदृष्टीनां भयङ्करम् । विनेयेभ्यो हितायोक्तं नैरात्म्यं तेन तु स्फुटम् ।।" [ तत्त्वसं० पृ० ८६६ ]　　25

पृ० ८९. पं० १७. 'मैत्र्यादि'–तुलना–"मैत्रीकरुणामुदितोपेक्षाणां सुखदुःख-पुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनम् ।" [ योगसू० १।३३ ] "मैत्रीप्रमोदकारुण्य-माध्यस्थ्यानि च सत्त्वगुणाधिकक्लिश्यमानाविनयेषु ।" [ तत्त्वार्थसू० ७।११ ] "चत्वारो ब्रह्म-विहाराः–मैत्री करुणा मुदितोपेक्षा चेति ।" [ धर्मसं० पृ० ४ ] "मैत्र्यद्वेषः करुणा च मुदिता सुमनस्कता । उपेक्षाऽलोभः ।" [ अभिधर्मको० ८।३० ]　　30

पृ० ९०. पं० ३. 'सप्तभंगी'–तुलना–"सिय अत्थि णत्थि उहयं अव्वत्तव्वं पुणो य तत्तिदयं । दव्वं खु सत्तभंगं आदेसवसेण संभवदि ।।" [ पंचास्तिका० गा० १४ ] प्रवचनसा० २।२३ । "अत्थंतरभूएहि य णियएहि य दोहि समयमाईहिं । वयणविसेसाईयं दव्वमवत्तव्वयं पडइ ।।" [ सन्मति० १।३६–४० ] "कथञ्चित्ते सदेवेष्टं कथञ्चिदसदेव तत् । तथोभयमवाच्यञ्च नययोगान्न सर्वथा ।।" [ आप्तमी० का० १४ ] "विधिर्निषेधोऽनभिलाप्यता च त्रिरेकशस्त्रि द्विश एक एव । त्रयो विकल्पास्तव सप्तधामी स्याच्छब्दनेयाः सकलेऽर्थभेदे ।।" [ युक्त्यनु० श्लो० ४६ ] "अत्थि त्ति य णत्थि त्ति य हवदि अवत्तव्वमिदि पुणो दव्वं । पज्जाएण दु केणवि तदुभयमादिट्ठमण्णं वा ।।" [ विशेषा० गा० २२३२ ] "प्रश्नवशादेकत्र　　35

वस्तुन्यविरोधेन विधिप्रतिषेधकल्पना सप्तभङ्गी।" [ राजवा० १।६ ] "द्रव्यपर्यायसामान्य-विधानप्रतिषेधतः। सहक्रमविवक्षायां सप्तभङ्गी तदात्मनि॥" [ प्रमाणसं० पृ० १२२ ] तत्त्वार्थश्लो० पृ० १२८। प्रमेयरत्नको० पृ० ५। प्रमाणनय० ४।१३-२१। जैनतर्कभा० पृ० १९। नयोप० पृ० ९४ A.। स्याद्वादमं० का० २३। सप्तभङ्गित० पृ० २।

5 पृ० ९०. पं० १४. **'प्रयोगविरहे'**–तुलना–लघी० टि० पृ० १५१ पं० २९।

पृ० ९१. पं० ४. **'संशयादिप्रसङ्गः'**–पूर्वपक्षः–" अथोत्पादव्ययध्रौव्ययुक्तं यत्तत्सदिष्यते। एषामेव न सत्त्वं स्यात् एतद्भावावियोगतः॥ यदा व्ययस्तदा सत्त्वं कथं तस्य प्रतीयते। पूर्वं प्रतीते सत्त्वं स्यात्तदा तस्य व्ययः कथम्॥ ध्रौव्येपि यदि नास्मिन् धीः कथं सत्त्वं प्रतीयते। प्रतीतेरेव सर्वस्य तस्मात् सत्त्वं कुतोऽन्यथा॥ तस्मान्न नित्यानित्यस्य

10 वस्तुनः संभवः क्वचित्। अनित्यं नित्यमथवास्तु एकान्तेन युक्तिमत्॥" [ प्रमाणवार्तिकालं० लि० पृ० २३५ ] "उत्पादव्ययध्रौव्ययुक्तं सदित्येतदप्ययुक्तम्; ध्रौव्येण उत्पादव्यययोर्विरोधात्, एकस्मिन् धर्मिण्ययोगात्। कथञ्चिदुत्पादव्ययौ कथञ्चिद् ध्रौव्यमिति चेत्; यथा उत्पादव्ययौ न तथा ध्रौव्यम्, यथा च ध्रौव्यं न तथोत्पादव्ययौ इति नैकं वस्तु यथोक्तलक्षणं स्यात्।" [ हेतुबि० टी० लि० पृ० २१६ ] द्रष्टव्यम्–न्यायकुमु० पृ० ३६० टि० १, ३६१ टि० १।

15 तुलना–"न चास्य विरोधसङ्करानवस्थाप्रसङ्गदोषानुग्रहण···" [ नयचक्रवृ० लि० पृ० ५८ B. ] अष्टश०, अष्टसह० पृ० २०६। प्रमाणसं० पृ० १०३। तत्त्वार्थश्लो० पृ० ४३५। प्रमेयक० पृ० १५८ A.। न्यायकुमु० पृ० ३७०। सन्मति० टी० पृ० ४५१। स्या० रत्ना० पृ० ७४१। प्रमेयरत्नमा० ४।१। प्रमाणमी० पृ० २८। शास्त्रवा० टी० पृ० २६५। सप्तभङ्गित० पृ० ८१।

पृ० ९२. पं० २. **'अप्राप्यकारिणः'**–तुलना–" ज्ञस्वभावस्य अप्राप्यकारिणः प्रति-

20 बन्धाभावे त्रिकालगोचरमशेषं द्रव्यं कथञ्चिज्जानतो न कश्चिद्विरोधः।" [सिद्धिवि० पृ०१९४B.]

पृ० ९३. पं० १. **'यदि किञ्चिद्विशेषेण'**–तुलना–लघी० का० १९। लघी० टि० पृ० १३९ पं० ३४।

पृ० ९३. पं० ८. **'आद्ये परोक्ष'**–तुलना–" आद्ये परोक्षम्। प्रत्यक्षमन्यत्।" [ तत्त्वार्थसू० १।११, १२ ]

25 पृ० ९३. पं० ११. **'केवलं लोक'**–तुलना–" केवलं लोकबुद्ध्यैव बाह्यचिन्ता प्रतन्यते।" [ प्रमाणवा० ३।२१९ ]

पृ० ९३. पं० १६. **'प्रमाणस्य फलं'**–तुलना–" उपेक्षा फलमाद्यस्य शेषस्यादानहानधीः। पूर्वा वाऽज्ञाननाशः सर्वस्यास्य स्वगोचरे॥" [आप्तमी० का० १०२] "प्रमाणस्य फलं साक्षादज्ञानविनिवर्तनम्। केवलस्य सुखोपेक्षे शेषस्यादानहानधीः॥" [न्यायाव० श्लो०

30 २८] "उपेक्षा अज्ञाननाशो वा फलम्।" [ सर्वार्थसि० १।१० ] "प्रमाणस्य फलं साक्षात्सिद्धिः स्वार्थविनिश्चयः।" [ सिद्धिवि० पृ० १२६ A. ] तत्त्वार्थश्लो० पृ० १२७। परीक्षामु० ५।१,२। प्रमाणनय० ६।१-५। प्रमाणमी० १।१।३४-४०।

पृ० ९३. पं० २१. **'नयचक्रतः'**–तुलना–" आत्मज्ञानादिभेदानामानन्त्यं नयचक्रतः।" [ प्रमाणसं० पृ० १२५ ] "तद्विशेषाः प्रपञ्चेन सञ्चिन्त्या नयचक्रतः।" [ तत्त्वार्थ-

35 श्लो० पृ० २७६ ] अष्टसह० पृ० २८८। नयविव० पृ० २६४। प्रमेयरत्नमा० ३।७४।

## इति न्यायविनिश्चयस्य टिप्पणानि।

———:0:———

# प्रमाणसङ्ग्रहस्य

## ॥ टिप्पणानि ॥

पृ० ६७. पं० १. 'श्रीमत्परम'–कारिकेयं निम्नशिलालेखेषु वर्तते–चन्द्रगिरिपर्वतस्य ३६, ४२, ४३, ४४, ४५, ४८, ५१, ५२, ५३, ५५, ५६, ६८। विन्ध्यगिरिपर्वतस्य ८१, ८२, ८३, ६०, ६६, ६६, १०५, १११, ११३, १२४, १३०, १३७, १३८, १४१, १४४, २२६, ३६२, ४८६, ४६३, ४६४, ४६५, ४६६, ५००। [ जैनशिलालेखसं० ]

तुलना–"जीयान्निरस्तनिःशेषसर्वथैकान्तशासनम्। सदा श्रीवर्द्धमानस्य विद्यानन्दस्य शासनम्॥" [ पत्रपरी० पृ० १३ ] 5

पृ० ६७. पं० ३. 'प्रत्यक्षं'–अस्या व्याख्यानं तत्त्वार्थश्लोकवार्तिके इत्थम्–"······अकलङ्कैरभ्यधायि यः ॥१७८॥ प्रत्यक्षं विशदं ज्ञानं त्रिधा श्रुतमविप्लु (प्लु) तम्। परोक्षं प्रत्यभिज्ञादि प्रमाणे इति सङ्ग्रहः॥ १७६ ॥ 'प्रत्यक्षं विशदं ज्ञानं त्रिधा' इति ब्रुवाणेनापि मुख्यमतीन्द्रियं पूर्णं केवलमपूर्णमवधिज्ञानं मनःपर्ययज्ञानं चेति निवेदितमेव, तस्याक्ष- 10 मात्मानमाश्रित्य वर्तमानत्वात्। व्यवहारतः पुनः इन्द्रियप्रत्यक्षमनिन्द्रियप्रत्यक्षमिति वैशद्यांशसद्भावात् ततो न सूत्रव्याहतिः। श्रुतं प्रत्यभिज्ञादि च परोक्षम् इत्येतदपि न सूत्रविरुद्धम् 'आद्ये परोक्षम्' इत्यनेन तस्य परोक्षत्वप्रतिपादनात्। अवग्रहेहावायधारणानां स्मृतेश्च परोक्षत्ववचनात् तद्विरोध इति चेन्न; प्रत्यभिज्ञादीत्यत्र वृत्तिद्वयेन सर्वसङ्ग्रहात्। कथम् ? प्रत्यभिज्ञाया आदिः पूर्वं प्रत्यभिज्ञादि इति स्मृतिपर्यन्तस्य ज्ञानस्य सङ्ग्रहात् प्राधान्येन अवग्रहादेरपि 15 परोक्षत्ववचनात्, प्रत्यभिज्ञा आदिर्यस्य इति वृत्त्या पुनः अभिनिबोधपर्यन्तसङ्गृहीतेर्न काचित् परोक्षव्यक्तिरसङ्गृहीता स्यात्। तत एव प्रत्यभिज्ञादि इति युक्तम् व्यवहारतः, मुख्यतः स्वेष्टस्य परोक्षव्यक्तिसमूहस्य प्रत्यायनात्, अन्यथा 'स्मरणादि परोक्षं तु प्रमाणे इति सङ्ग्रहः' इत्येवं स्पष्टमभिधानं स्यात्, ततः शब्दार्थाश्रयणान्न कश्चिद्दोषोऽत्रोपलभ्यते।" [ तत्त्वार्थश्लो० पृ० १८५ ] 20

तुलना–"प्रमाणसङ्ग्रहादौ 'प्रमाणे इति सङ्ग्रहः' इत्यभिधाय···" [सिद्धिवि० टी० पृ० ४ A. ] "तदुक्तम्–प्रत्यक्षं विशदं ज्ञानं त्रिधाश्रित···" [ अष्टसह० पृ० २८१ ] "प्रत्यक्षं विशदं ज्ञानं त्रिधा इति शास्त्रान्तरे प्रतिपादनात्।" [ न्यायवि० वि० पृ० ५३ A. ] "प्रत्यक्षं विशदं ज्ञानं त्रिधैन्द्रियमनैन्द्रियम्। योगजं चेति···" [ जैनतर्कवा० पृ० ९३ ]

पृ० ६७. पं० ६. 'श्रुतमविप्लवं'–अकलङ्केन श्रुतं प्रत्यक्षानुमानागमनिमित्त- 25 कतया त्रिधा विभक्तम्। जैनतर्कवार्त्तिककृता तु लिङ्ग-शब्दसमुद्भूततया द्विधा परोक्षं स्वीकृत्य अकलङ्कमतं निरस्तम्। तथाहि–"परोक्षं द्विविधं प्राहुर्लिङ्गशब्दसमुद्भवम्। लैङ्गिकप्रत्यभिज्ञादि भिन्नमन्ये प्रचक्षते॥—नन्वन्यदपि प्रत्यभिज्ञादिकं परोक्षं मन्यन्ते, तदेव लैङ्गिकप्रत्यभिज्ञादि-

भिन्नमन्ये वक्षते समानतन्त्राः । 'परोक्षं प्रत्यभिज्ञादि त्रिधा श्रुतमविप्लवम्' इति वचनादिति।
तदयुक्तम्;... त्रिविधं भवति श्रौतं न त्वविप्लवं प्रमाणमित्यर्थः। प्रत्यक्षे हि परोपदेशस्य
अनर्थकत्वात्।... तन्नेदं श्रुतस्य लक्षणम्। किं तर्हि? इत्याह-परोपदेशजं श्रौतमिति। परोपदेशजं
श्रौतमति शेषं जगुर्जिनाः। परोक्षं प्रत्यभिज्ञादि त्रिधा श्रौतं न युक्तिमत्॥" [जैनतर्कवा० पृ० १३१]

5 पृ० ९७. पं० ७. '**हिताहितप्राप्ति**'-तुलना-"हिताहितप्राप्तिपरिहारसमर्थं हि
प्रमाणं ततो ज्ञानमेव तत्।" [परीक्षामु० १।२] प्रमाणनय० १।३। "हिताहितार्थसम्प्राप्तित्या-
गयोर्यन्निबन्धनम् तत्प्रमाणं..." [जैनतर्कवा० पृ० १]

पृ० ९७. पं० १६. '**अक्षज्ञान**'-"तदुक्तम्-अक्षज्ञानमनेकान्तमसिद्धेरपराकृतेः।"
[सिद्धिवि० टी० पृ० ४७२ A.]

10 पृ० ९८. पं० २. '**विविधान्**'-"तथा चात्र देवस्य वचनम्-विवादानुविवा-
दनस्य विकल्पनान्तरीयकत्वात्।" [न्यायवि० वि० पृ० ८३ A.]

पृ० ९८. पं० १३. '**स्वार्थमात्राध्य**'-तुलना-"अधिगमोऽपि व्यवसायात्मैव,
तदनुत्पत्तौ सतोऽपि दर्शनस्य साधनान्तरापेक्षया सन्निधानाभेदात् सुषुप्तचैतन्यवत्। सन्निधानं
हि इन्द्रियार्थसन्निकर्षः।" [अष्टश०, अष्टसह० पृ० ७५, १२३]

15 पृ० ९८. पं० १४. '**तिमिराद्य**'-तुलना-लघी० टि० पृ० १४० पं० २६।

पृ० ९८. पं० १७. '**परोक्षज्ञानार्थ**'-तुलना-न्यायवि० टि० पृ० १५६ पं० १३।

पृ० ९८. पं० २७. '**कालेनैतावता**'-अस्य व्याख्यानं न्यायविनिश्चयविवरणे
इत्थम्-"एतावताऽनादिरूपेण कालेन कथं न प्रलयं गतः तदागमः। कीदृशोऽनाप्तः, अविद्यमानः
तदर्थाभिमुखे साक्षात्कारिपुरुषः प्रलयङ्गतोपपत्त्येव रागाद्युपहतचेतस्कतया प्रज्ञाबलवैकल्यादिना
20 चार्वाकदर्शिनामनुपदेशान्यथोपदेशादेरप्रतिवेदनादेश्च प्रतिपुरुषमुपक्षीयमाणस्य सर्वत्रापि देशा-
दिना कालेन निर्मूलान्मूलनस्य सम्भवात्। दृश्यते हि इदानीन्तनानामपि नैपथ्यादिव्यव-
हाराणां बहुजनपरिगृहीतानामपि निर्मूलप्रलयः।" [न्यायवि० वि० पृ० ५६२ A.]

पृ० ९९. पं० ३. '**सत्यस्वप्नवत्**'-"तद्धि सत्यस्वप्नज्ञानम् इन्द्रियासंसृष्टं व्यव-
हितं चार्थमवैति इति प्रमाणसङ्ग्रहे निरूपितम्।" [सिद्धिवि० टी० पृ० ४३० B.]

25 तुलना-"इहापि सत्यस्वप्नदर्शिनोऽतीतादिकं विदन्त्येव। (पृ० ३९६) सत्यस्वप्नदर्श-
नवत्-सत्यस्वप्नदर्शनं हि तत्कालानुयातेनैव ग्राहकमीक्षते।" [प्रमाणवार्तिकाल० लि० पृ० ४१०]
"एतदुक्तम्-यथाहि सत्यस्वप्नदर्शिनो ज्ञानं परमार्थतोऽविषयमपि प्रतिनियतविषयाकारं लिङ्गा-
गमानपेक्षञ्चाश्रयविशेषादुत्पद्यमानमुपदर्शितार्थप्रापकत्वेनाविसंवादि भवति तथा योगिज्ञानं
प्रज्ञापारमितायोगाभ्यासबलेन यथैव तदभूद्भवति भविष्यति च अतीतं वर्तमानमनागतं वस्तु
30 परेण परिकल्पितं तथैवोपदर्शितविविधाकारप्रकारप्रभेदप्रपञ्चं बहिरिव परिस्फुटद्रूपं स्फुटप्रति-
भासं लिङ्गागमानपेक्षमविसंवादितयोत्पन्नं प्रत्यक्षं प्रमाणमिष्यते। अतश्चैवं भगवतः सर्वत्र
साक्षाद्दर्शित्वाभ्युपगमात् यत्र प्राप्तं न विज्ञातं साक्षात्कृतं तदभावेन सर्वज्ञज्ञानमुच्यते। यतो
भ्रान्तिनिवृत्तावप्याकारनिवृत्तेः प्रतिबन्धाभावेनासंभवः इति मध्यमकनयानुसारिणार्यनागा-
र्जुनपादप्रभृतयः।" [अभिसमयालङ्कारालो० पृ० १७७]

35 सत्यस्वप्नज्ञानदृष्टान्तस्य समालोचनं निम्नग्रन्थेषु दृश्यते-"ये तु पुनः सर्वमेव योगिवि-
ज्ञानमनालम्बनं सत्यस्वप्नदर्शनवद्वस्तुसंवादितया प्रमाणमिति प्रतिपन्नाः; तान् प्रत्यन्तपस्वचोद्यं

दूरीकृतावकाशमेव।" [तत्त्वसं० पं० पृ० ९३२] "सत्यस्वप्नदर्शनं तु यदि वर्तमानस्य···" [विधिवि० पृ० १५९]

पृ० ९९. पं० ४. 'एकत्र निर्णये'–तुलना–न्यायवि० टि० पृ० १५५ पं० १७।

पृ० ९९. पं० ९. 'ईक्षणिकादेः'–तुलना–न्यायवि० टि० पृ० १६८ पं० ३।

पृ० ९९. पं० ११. 'लक्षणं'–अस्य व्याख्यानं न्यायविनिश्चयविवरणे इत्थम्– 5
"लक्षणं स्पष्टं प्रत्यक्षम् इत्येतत् समं सदृशं त्रिष्वपि प्रत्यक्षेषु। कस्तर्हि इन्द्रियप्रत्यक्षात् अतीन्द्रियप्रत्यक्षस्य विशेष इति चेत्; एतावान् विशेषः अशेषगोचरं निःशेषद्रव्यपर्यायपरिच्छेदरूपमतीन्द्रियप्रत्यक्षम्। क्रमेण तद्गोचरमपीतरवदपि प्रत्यक्षमिति चेदत्राह–अक्रमम् इति। इन्द्रियायत्तत्वे कथमितरवत् तदप्यक्रमं तद्गोचरमिति चेदत्राह–करणातीतं करणानि इन्द्रियाणि अतीतमतिक्रान्तं तन्निरपेक्षत्वात्। तस्यैव समर्थनमकलङ्कम् इति, अविद्यमानज्ञानावरणादिकल्मषमित्यर्थः।···तत्केषां प्रत्यक्षम् इत्याह–महीयसाम् महतामिति।" [न्यायवि० वि०पृ० ३९९ A.] 10
तुलना–न्यायवि० टि० पृ० १६२ पं० २५।

इति प्रथमः प्रस्तावः।

पृ० ९९. पं० १५. 'प्रमाणमर्थं'–तुलना–"प्रमाणमविसंवादात् मिथ्या तद्विपर्ययात्। गृहीतग्रहणान्नो चेन्न प्रयोजनभेदतः॥" [सिद्धिवि० पृ० १४६ A.] 15

पृ० ९९. पं० २५. 'सदृशपरिणामः'–तुलना–"सदृशपरिणामस्तिर्यक् खण्डमुण्डादिषु गोत्ववत्।" [परीक्षामु० ४।४] प्रमाणनय० ५।४।

पृ० १००. पं० २६. 'एकमनेकत्र'–तुलना–लघी० टि० पृ० १४५ पं० २८।

पृ० १००. पं० ३०. 'इति तर्क'–अस्य व्याख्यानं न्यायविनिश्चयविवरणे इत्थम्–
"इति एवं तर्कमेव एवकारस्यात्र सम्बन्धात् नापरं तस्य प्रतिबन्धाविषयत्वादपेक्षितम्, किं लैङ्गिकम् अनुमानं लिङ्गादागतत्वात्, कथमपेक्षेत नियमेन अवश्यम्भावेन, तदनपेक्षत्वे तदनुत्पत्तेः।" [न्यायवि०वि० पृ० ५०४ B.] 20

पृ० १०१. पं० ७. 'विज्ञानगुणदोषाभ्याम्'–"तदुक्तम्–विज्ञानगुणदोषाभ्यां··" [अष्टसह० पृ० ७४] "विवक्षामन्तरेणापि वाग्वृत्तिर्जातु वीक्षते। वाञ्छन्तो वा न वक्तारः शास्त्राणां मन्दबुद्धयः॥" [न्यायवि० पृ० ७७] "न च दोषजातिस्तद्धेतुर्यतस्तां वाणी नातिवर्त्तेत तत्प्रकर्षापकर्षानुविधानाभावात् बुद्धयादिवत्···।" [अष्टश० अष्टसह०पृ० ७३] 25
तुलना–"वचनस्य विज्ञानमेव कारणम् असति तस्मिन्निच्छायामपि तदभावात्···" [न्यायवि० वि० पृ०५२० A.]

इति द्वितीयः प्रस्तावः।

पृ० १०२. पं० १. 'साध्यं शक्य'–तुलना–न्यायवि० टि० पृ० १६२ पं० ३२। 30

पृ० १०२. पं० २. 'भ्रान्तेः पुरुष'–तुलना–न्यायवि० टि० पृ० १६३ पं० ७।

पृ० १०२. पं० ६. 'साधनं'–तुलना–न्यायवि० टि०पृ० १६४ पं० ७।

पृ० १०२. पं० २५. 'एकं चलं'–तुलना–न्यायवि० टि० पृ० १६४ पं० १३।

पृ० १०३. पं० १. 'स्वलक्षण'–अस्य व्याख्यानं न्यायविनिश्चयविवरणे इत्थम्–"स्व-लक्षणम् असङ्कीर्णपदेन स्वलक्षणस्य विशेषात्मकत्वं समानपदेन च सामान्यात्मकत्वमुक्तम् अतः सामान्यविशेषात्मकत्वात् सर्वं वस्तु सविकल्पकमेव नाऽसहायस्वभावमत एवाह–सविकल्प-
5 कमिति (पृ० ३५२A.) समर्थमिति यस्मात् स्वकार्ये समर्थं शक्तं स्वलक्षणं तस्मादसङ्कीर्णमिति। स्वलक्षणस्य स्वरूपमाह स्वगुणैरेकम् इति। स्वग्रहणेन परगुणैरेकत्वाभावमावेदयन् 'चोदितो-दधि खादेति' इत्यादेरनवकाशत्वं दर्शयति। गुणशब्देन च तस्य सामान्यवाचित्वात् गुणपर्य-ययोरुभयोरपि ग्रहणम्। अत एवाह–सहक्रमविवर्तिभिः इति।" [न्यायवि० वि० पृ० ३५४ B.]

पृ० १०३. पं० ४. 'संशयविरोध'–तुलना–न्यायवि० टि० पृ० १७० पं० ६।

10 पृ० १०३. पं० १५. 'विप्लवेऽपि'–तुलना–न्यायवि० टि० पृ० १५९ पं० ११।

पृ० १०३. पं० २१. 'कस्यचित्कैवल्यं'–तुलना–"तस्य कैवल्यमेव अपरस्य वैकल्यमिति।" [ हेतुबि० लि० ] अष्टश० अष्टसह० पृ० ५३। "पूर्वस्य कैवल्यम् अपरस्य वैकल्यम्।" [ सिद्धिवि० पृ० ३६२ ]

पृ० १०३. पं० २४ 'परापरविभागैक'–तुलना–"अधऊर्ध्वविभागादिपरिणाम-
15 विशेषतः। तानेव पश्यन् प्रत्येति शाखा वृक्षेऽपि लौकिकः॥ जयश्च ( अधश्च ) ऊर्ध्वं च ये विभागा मूलशाखारूपा अवयवास्ते आद्यो येषां पार्श्वमध्यविभागानां तैः सह परिणाम-विशेषः कथञ्चिदभेदपरिणामः तत इति, अभेदपरिणामाद्धि शाखाभिरिह शाखिनः शाखासु वृक्ष इत्येष प्रत्ययः परिदृश्यते...यदि च शाखासु वृक्ष इति प्रत्ययात् तत्र वृक्षस्य कार्यत्वेन वृत्तिः वृक्षे शाखा इत्यपि प्रत्ययात् तासामपि तत्र तथा वृत्तिः प्राप्नुयात्, एवं च न यावच्छाखा
20 न तावद् वृक्षः न यावच्च वृक्षो न तावच्छाखा इति परस्पराश्रयादुभयाभावः परस्यापत्तेः इति आवेदयन्नाह–तानेव पश्यन् प्रत्येति शाखा वृक्षेऽपि लौकिकः इति। तानेव प्रकृतानवयवान् अवयविनं च पश्यन् प्रत्येति प्रतिपद्यते शाखा आधेयभूता वृक्षे आधारभूते न केवलं तासु वृक्षम् अपि तु तत्रापि ताः प्रत्येतीत्यपिशब्दार्थः। कः प्रत्येति ? लौकिकः...।" [ न्यायवि० वि० पृ० २२७ A. ]

25 पृ० १०३. पं० २६. 'प्रमाणमात्मसात्कुर्वन्'–व्याख्या इत्थं द्रष्टव्या–"प्रमाण-मवितथनिर्भासं ज्ञानम् आत्मसात्कुर्वन् प्रतीतिं यथार्थपरिच्छित्तिमतिलङ्घयेत् प्रत्याचक्षीत सौगतो ब्रह्मवादिवन् तामतिलङ्घयेत्। वितथा मिथ्याभिमता ये ज्ञानानां सन्तानविशेषाः कामि-न्यादिविषयाः तरङ्गचन्द्रादिविषयाश्च प्रवाहभेदास्तेषु न केवलं न प्रमाणमन्तरेण तदनतिलङ्घ-नस्यापि तथाप्राप्तेः। न च तदात्मसात्करणं परस्योपपन्नम्...।" [न्यायवि० वि० पृ० १६७ B.]

30 तुलना–न्यायवि० टि० पृ० १५८ पं० ३३।

पृ० १०३ पं० २८ 'चित्रं तदेक'–तुलना–न्यायवि० टि० पृ० १६० पं० २२।

व्याख्यानं त्वस्य न्यायविनिश्चयविवरणे इत्थम्–"चित्रं नानारूपं तद् बाह्यं चित्रपतङ्गादि एकमभिन्नमित्येवं चेत् यदि मन्यते जैन इदमनन्तरोक्तं ततश्चित्रादतिशयेन चित्रं चित्रतरं विस्मयनीयतरम्। तथाहि–यदि नानारूपं नैकं विरोधात् इत्यसदेव एकत्वम्, तद्भावे
35 च नानारूपं तस्यापि परमाणुरूपस्याबुद्धिगोचरत्वात् इत्यसन्नेव तादृशो बहिरर्थ इति भवत्येव तद्वादिनामुपहास इति भावः। परस्य तत्र प्रत्युपहासमाह–चित्रं शून्यमिदं सर्वं वेत्सि चित्र-

तमं तत इति। चित्रमिति–नानारूपं बाह्यं मयूरादि, कीदृशमिदं प्रत्यक्षवेद्यं सर्वं निरवशेषं वेत्सि जानासि, कीदृशं शून्यम् नीरूपमिदम् इत्यत्रापि सम्बन्धनीयम्, इदं परस्य वचनं ततः चित्रतरातिशयेन चित्रं चित्रतमम् अनुपायस्यैव तदभाववेद्यस्य प्रतिपादनात्..." [न्यायवि० वि० पृ० २०५ B.]

5

इति तृतीयः प्रस्तावः।

पृ० १०४. पं० २. 'अन्यथाऽसंभवो'–तुलना–न्यायवि० टि० पृ० १६४ पं० १९।

पृ० १०४. पं० ५. 'उदेष्यति शकटं'–तुलना–लघी० टि० पृ० १३९ पं० २०।

पृ० १०४. पं० ५. 'कालादिधर्मिकल्पनायाम्'–तुलना–"यदि पुनराकाशं कालो वा धर्मी तस्य उदेष्यच्छकटवत्त्वं साध्यं कृतिकोदयसाधनं पक्षधर्म एवेति मतम्; तदा धरित्रीधर्मिणि महोदध्याधाराग्निमत्त्वं साध्यं महानसधूमवत्त्वं साधनं पक्षधर्मोऽस्तु, तथा च महानसधूमो महोदधौ अग्निं गमयेदिति न कश्चिदपक्षधर्मो हेतुः स्यात्......" [प्रमाणपरी० पृ० ७१] तत्त्वार्थश्लो० पृ० २०१। जैनतर्कभा० पृ० १२ पं० १३। "कृतिकोदयपूरादेः कालादिपरिकल्पनात्। यदि स्यात्पक्षधर्मत्वं चाक्षुषत्वं न किंचनो (किं ध्वनौ)॥" [जैनतर्कवा० पृ० १४०] 10

पृ० १०४. पं० १८. 'सत्प्रवृत्तिनिमित्तानि'–तुलना–"अविरुद्धोपलब्धिः विधौ षोढा व्याप्यकार्यकारणपूर्वोत्तरसहचरभेदात्।" [परीक्षामु० ३।५४–७२] प्रमाणप० पृ० ७३। प्रमाणनय० ३।६४–७८। प्रमाणमी० भाषाटि० पृ०। ८३ पं० २३। 15

पृ० १०४. पं० २४. 'निरुपाख्यत्वम्'–तुलना–"सर्वसामर्थ्योपाख्याविरहलक्षणं हि निरुपाख्यमिति, उपाख्या श्रुतिः उपाख्यायतेऽनया इति कृत्वा।" [वादन्याय पृ० ८]

पृ० १०५. पं० १. 'असद्व्यवहाराय'–तुलना–"प्रतिषेधसिद्धिरपि यथोक्ताया एवानुपलब्धेः...सा च प्रयोगभेदादेकादशप्रकारा–स्वभावानुपलब्धिः, कार्यानुपलब्धिः, व्यापकानुपलब्धिः, स्वभावविरुद्धोपलब्धिः, विरुद्धकार्योपलब्धिः, विरुद्धव्याप्तोपलब्धिः, कार्यविरुद्धोपलब्धिः, व्यापकविरुद्धोपलब्धिः, कारणानुपलब्धिः; कारणविरुद्धोपलब्धिः, कारणविरुद्धकार्योपलब्धिः।" [न्यायबि० पृ० ४२–५४] परीक्षामु० ३।७३–८०। प्रमाणनय० ३।९०–९८। 20

पृ० १०५. पं० १६. 'सद्वृत्तिप्रतिषेधाय'–तुलना–न्यायबि० पृ० ४२–५४। परीक्षामु० ३।६६–७२। प्रमाणनय० ३।७९–८८। 25

पृ० १०६. पं० १६. 'अविप्रतिसार'–"पश्चात्तापोऽनुतापश्च विप्रतीसार इत्यपि" [अमरकोशः] "तत्र विदूषणसमुदाचारोऽकुशलं कर्माध्यचारति, तत्रैव तत्रैव च विप्रतिसारबहुलो भवति।" [शिक्षासमु० पृ० १६०] न विप्रतिसारः अविप्रतिसारः दोषरहित इत्यर्थः।

पृ० १०७. पं० ४. 'स्वरुचि'–तुलना–"इति स्वरुचिविरचितदर्शनप्रदर्शनमात्रम्" [अष्टश०, अष्टसह० पृ० १०२] 30

पृ० १०७. पं० ११. 'अप्रत्यक्षेऽपि'–अस्य व्याख्या न्यायविनिश्चयविवरणे इत्थम्–"अप्रत्यक्षेऽपि..ज्ञानं नेति सन्तः प्रचक्षते॥–बहलतमःपटलपरिपिहितलोचनदशायामप्रत्यक्षेऽपि विस्पष्टप्रतिभासाविषयेऽपि न केवलं विपुलविलसदालोकपरिकलितदेशदशायां प्रत्यक्षेपि इत्यपिशब्दः। कस्मिन्? देहे शरीरेऽस्मिन्नात्मीये प्रतीयमाने प्रत्यक्षं स्पष्टावभासं ज्ञानम्, कुत एतत् 35

स्वतन्त्रं यथा भवति तथाऽवभासनात् । किम् ? तद्गुणः तस्य देहस्य गुणः, तदाश्रयान्नेति सन्तः प्रचक्षते कथयन्ति । नहि तस्मिन्नप्रत्यक्षेपि प्रत्यक्षस्य तदा (द्) गुणत्वं रूपादेराकाशगुणत्वप्रसङ्गात्...” [ न्यायवि० वि० पृ० ४५७ B. ]

पृ० १०७. पं० १३. 'सत्यं तमाहु'–अस्य व्याख्या इत्थम्–“सत्यमवितथम् आत्मन एव विचारविषयतया प्रस्तुतत्वात्, आहुः आवेदयन्ति । के ? आचार्य (र्याः) विचारज्ञानप्रवर्त्तकाः...कीदृशं तत् इत्याह–योऽवलोकते पश्यति । कया ? विद्यया यथावस्थितवस्तुरूपावलोकनशक्त्या...कमवलोकते ? यथार्थं यो येन स्वभावेन स्थितोऽर्थः स यथार्थः तमिति... पुनरपि तत्स्वरूपमाह–विभ्रमैश्च मिथ्याकारग्रहणशक्तिविशेषैश्च, चशब्दः पूर्वसमुच्चयार्थः अयथार्थ (र्थं) मिथ्याकार (रं) योऽवलोकते...कः पुनरसौ यो विद्यया यथार्थं विभ्रमैश्च अयथार्थमवलोकते इत्याह–एषः प्रत्यात्मवेदनीयः...कीदृशः पुनरेषोऽपि इत्याह–प्रभुः इति, प्रभुत्वं पुनस्तस्य यथार्थाद्यवलोकने विषयाकारस्य व्यतिरिक्तविज्ञानस्य च अनपेक्षणात्...” [ न्यायवि० वि० पृ० १५० B. ]

पृ० १०७. पं० १५. 'तुलोन्नाम'–अस्य व्याख्या इत्थम्–“तुलाया उन्नामश्च ऊर्ध्वगमनं रसश्च तावधी (वादी) येषाम् अर्वाग्भागसास्नादीनां तेषां नहि स्फुटम्, किम् नामश्च अधोगमनं रूपं च आदिर्येषां परभागविशेषणादीनां त एव हि (हे) तवो येषां तेषां भावः तत्त्वम् । कया युक्त्या तत्तेषां न तुल्यकालतया [ सम ] समयतया इति ? नहि समसमयत्वे युक्तो हेतुफलभावः परस्परमनुपयोगात् सव्येतरनारीकुचचूचुकवदनभ्युपगमात् । नचैवमहेतुः अव्यभिचारात्, नहि नामादेः उन्नामादिव्यभिचारः निर्व्यभिचाराया एव ततः तत्प्रतिपत्तेरुपलम्भात्...।” [ न्यायवि० वि० पृ० ५०९ A. ]

पृ० १०७. पं० १७. 'अन्वयोऽन्य'–अस्य व्याख्यानमित्थम्–“अन्वयोऽनुगमः खण्डादिषु गौरिति तन्तुषु अयं पट इति रुचकादौ तदेवेदं सुवर्णमिति रूपः, स अन्यस्य कर्कादेः मृगादेश्च व्यवच्छेद एव नापरः । तथा सर्वस्मात् सजातीयात् विजातीयाच्च व्यतिरिच्यते भिद्यते इति व्यतिरेकः, स एव स्वलक्षणम् न पूर्वोक्तम्, ततः तस्मात् अन्वयात् स्वलक्षणाच्च सर्वा निरवशेषा व्यवस्था स्वाभिमतवस्तुव्यवस्थितिः इति एवं नृत्येत् नृत्यं कुर्यात् काक इव काकः सौगतः तद्व्यवस्थात्मनि नृत्यक्रियायाम् उपायात्मनः पिच्छभारस्य अभावात्, मयूर इव मयूरो चैन (जैनः) तस्य तद्भावस्य निवेदनात् स इव तद्वदिति...” [न्यायवि० वि० पृ० ३६१ A.]

इति चतुर्थः प्रस्तावः ।

पृ० १०७. पं० २१. 'निर्व्यापारो'–तुलना व्याख्या च–“सत्ता सम्प्रतिबद्धैव परिणामे क्रियास्थितेः । निर्व्यापारो हि भावः स्यान्नित्यत्वे वा निरन्वये ।।–एवकारो भिन्नप्रक्रमः परिणाम इत्यत्र दर्शनात्, ततः सत्त्वा (सत्ता) सत्त्वं सम्यक् प्रतिबद्धा, क ? परिणाम एव न क्षणभङ्गादौ, ततः तत्रैव सा हेतुः इत्यर्थः। एतदेव कुतः ? क्रियास्थितेः परिणाम एव क्रियायाः कार्यकरणस्य स्थितेः अवस्थानादिति, तदपि कस्मात् ? निर्व्यापारो व्यापारान्निष्क्रान्तो हि यस्माद् भावः चेतनादिः स्याद् भवेत्, कस्मिन् सति ? निरन्वये क्षणभङ्गे, क्वेव ? नित्यत्वे वा नित्यत्व इव, वाशब्दस्य इवार्थत्वात् निरन्वय इव वा नित्यत्वे वा इति ।” [न्यायवि० वि० पृ० ५१६ B.]

पृ० १०८. पं० ३. 'इष्टविघातकृत्'–“इष्टस्य शब्देनानुपात्तस्य विघातं करोति विपर्ययसाधनात् इति इष्टविघातकृत् ।” [ न्यायबि० टी० पृ० १०३ ]

पृ० १०८. पं० १५. 'गण्डूपद'–तुलना–"अनेकान्तत्वं विरोधशङ्कया परिहरतस्ते त्वयैकान्तोपलम्भावलम्बनम् गण्डूपदभयादजगरमुखप्रवेशमनुसरति।" [ सिद्धिवि० पृ० ५३७ B. ]

पृ० १०८. पं० १७. 'दृष्टाद् गरिष्ठ'–तुलना–"नहि दृष्टाज्ज्येष्ठं गरिष्ठमिष्टम्" [ अष्टश० अष्टसह० पृ० ८० ] "नहि दृष्टाद्गरिष्ठं प्रमाणमस्ति।" [ नयचक्रवृ० लि० पृ० १८ B. ] 5

पृ० १०८. पं० २१. 'अदृश्यानुपम्भाद'–तुलना–लघी० टि० पृ० १३९ पं० २४।

पृ० १०८. पं० २८. 'संहतानाम्'–पूर्वपक्षः–"सङ्घातपरार्थत्वात्–यतः सङ्घातश्च परार्थः तस्माद्धेतोः, इह लोके ये सङ्घातास्ते परार्था दृष्टाः पर्यङ्करथशय्यादयः। एवं गात्राणां महदादीनां सङ्घातः समुदायः परार्थ एव। पर्यङ्करथादयः काष्ठसङ्घाताः, गृहादयः काष्ठेष्टिकादिसङ्घाताः। न हि ते रथगृहपर्यङ्कादयः किमपि स्वार्थं साधयन्ति न वा परस्परार्थाः, किन्तु 10 अस्त्यसौ देवदत्तादिः योऽस्मिन् पर्यङ्के शेते रथेन गच्छति गृहे निवसतीति। एवममी महदादयश्चक्षुरादयो वा न स्वार्था न च परस्परार्थाः किन्तु परार्थाः। यश्चासौ परः स चात्मा।" [ सांख्यका० माठरवृ० पृ० २९ ]

पृ० १०९. पं० २५. 'सहोपलम्भ'–तुलना–न्यायवि० टि० पृ० १५९ पं० २०।

पृ० ११०. पं० २. 'नास्ति सर्वज्ञः'–तुलना–न्यायवि० टि० पृ० १६७ पं० ३३। 15

पृ० ११०. पं० ६. 'सिद्धेऽकिञ्चित्करो'–तुलना–"सिद्धे प्रत्यक्षादिबाधिते च साध्ये हेतुरकिञ्चित्करः।" [ परीक्षामु० ६।३५ ]

पृ० ११०. पं० ११. 'विरुद्धाव्यभिचारिणः'–विरुद्धाव्यभिचारिणो लक्षणम्–"विरुद्धाव्यभिचारी यथा अनित्यः शब्दः कृतकत्वात् घटवत्, नित्यः शब्दः श्रावणत्वात् शब्दत्ववत् इति उभयोः संशयहेतुत्वाद् द्वावप्येतौ एकोऽनैकान्तिकः समुदितावेव।" 20 [ न्यायप्रवे० पृ० ५ ] "स्वलक्षणप्रयुक्तयोः हेत्वोः एकत्र धर्मिणि विरोधेनोपनिपाते विरुद्धाव्यभिचारीति।" [ हेतुवि० लि० ]

पृ० १११. पं० ५. 'विरुद्धाव्यभिचारी'–उद्धृतोऽयम्–प्रमाणनि० पृ० ६१।

पृ० १११. पं० १२. 'अन्तर्व्याप्ताव'–तुलना–"यथाच अन्तर्व्याप्तावसिद्धायां बहिर्व्याप्तेरकिञ्चित्करत्वं तथा सिद्धायामपि इति यद्वक्ष्यति प्रमाणसङ्ग्रहे–भविष्यति आत्मा 25 सत्त्वात्..." [ सिद्धिवि० टी० पृ० २३९ B. ] "अन्तर्व्याप्त्यैव साध्यस्य सिद्धौ बहिरुदाहृतिः। व्यर्था स्यात्तदसद्भावेऽप्येवं न्यायविदो विदुः॥" [ न्यायावता० श्लो० २० ] "तत्सिद्ध्यसिद्ध्योः बहिर्व्याप्तेरसाधनात्।" [ सिद्धिवि० पृ० ३०८ A. ] "अन्तर्व्याप्तावसिद्धायां बहिर्व्याप्तिरसाधनम्।" [ सिद्धिवि० पृ० २८१ A. ] अन्तर्व्याप्त्या हेतोः साध्यप्रत्यायने शक्तावशक्तौ च बहिर्व्याप्तेरुद्भावनं व्यर्थम्। पक्षीकृत एव साधनस्य साध्येन व्याप्तिरन्तर्व्याप्तिः, अन्यत्र तु 30 बहिर्व्याप्तिः यथा अनेकान्तात्मकं वस्तु सत्त्वस्य तथैवोपपत्तेः अग्निमानयं देशो धूमवत्त्वात्, य एवं स एवं यथा पाकस्थानम्।" [ प्रमाणनय० ३।३५, ३६ ] धर्मसं० वृ० पृ० ८२। जैनतर्कभा० पृ० १२।

इति पञ्चमः प्रस्तावः।

पृ० १११. पं० १५. 'वादः'—तुलना—"समर्थवचनं जल्पं वादं चतुरङ्गं विदुः। पक्षनिर्णयपर्यन्तं फलं मार्गप्रभावना ॥" [ सिद्धिवि० पृ० २५४ A. ] तत्त्वार्थश्लो० पृ० २८०। प्रमेयरत्नमा० ६।४७ । न्यायवि० टि० पृ० १६६ पं० ३६।

पृ० ११२. पं० ४. 'अपेक्षितपर'—तुलना—"अपेक्षितपरव्यापारो हि भावः
5 स्वभावनिष्पत्तौ कृतक इति ।" [ न्यायवि० पृ० ६७ ]

पृ० ११२. पं० ८. 'सति समर्थे'—तुलना—"नहि समर्थेऽस्मिन् सति स्वयमनुत्पित्सोः पश्चाद्भवतः तत्कार्यत्वं समनन्तरत्वं वा नित्यवत्…।" [अष्टश०, अष्टसह० पृ० १८२]

पृ० ११२. पं० ११. 'तदयं भावः'—तुलना—न्यायवि० टि० पृ० १६१ पं० १४।

पृ० ११२. पं० २८. 'योगक्षेम'—"योगः अप्राप्तविषयस्य परिच्छेदलक्षणा प्राप्तिः,
10 क्षेमः तदर्थक्रियानुष्ठानलक्षणं परिपालनम् ।" [हेतुवि० टी० लि०पृ०५५]

पृ० ११३. पं० २. 'त्रिलक्षणम्'—"यदि पुनः भावः स्थास्नु उत्पित्सुर्वा न भवेत् न कदाचिदपि तिष्ठेदुत्पद्येत वा खपुष्पवत् । न हि तन्नश्वरत्वमेव साधयत्यन्यत्राप्यविशेषात्। तदिमे स्वरसत एव उत्तरीभवन्तः यथायोगं परस्परोपकारमतिशयाधानमात्मसात्कुर्वन्ति ।" [ सिद्धिवि० पृ० १७२ ]

15 पृ० ११३. पं० ४. 'तदयमुत्पाद'—तुलना—"स्थितिरेव उत्पद्यते विनाश एव तिष्ठति उत्पत्तिरेव नश्यति ।" [ अष्टश० अष्टसह० पृ० ११२ ] नयचक्रवृ० लि० पृ० २९२ A.

पृ० ११३. पं० ६. 'प्रकृताशेष'—व्याख्या—"प्रकृतः विधिमुखेन निषेधमुखेन वा साधयितव्यतया प्रक्रान्तो यः अशेषः समग्रः साध्यसाधनरूपः तत्त्वार्थः, न सौगतवत् कल्पितस्वभावः,तस्य प्रकाशः सभ्यचेतसि समर्पणम् तत्र पटुत्वादिनः सकाशात् यो विपरीतः
20 तत्प्रकाशपाटवविकलःस निगृह्यते पराजयं प्राप्नोति…विब्रुवाणः विसदृशं दूषणमभिदधानोऽब्रुवाणो वा तूष्णीमासीनो वा विपरीत एव निगृह्यते इति ।" [न्यायवि० वि० पृ० ५२७ B.]

पृ० ११३. पं० २३. 'तत्र मिथ्योत्तरं'—व्याख्या—"तत्र मिथ्योत्तरं जातिः यथाऽनेकान्तविद्विषाम् । दध्युष्ट्रादेरभेदत्वप्रसङ्गादेकचोदनम् ॥ प्रमाणोपपन्ने साध्ये धर्मे यस्मिन् मिथ्योत्तरं भूतदोषस्य उद्भावयितुमशक्यत्वेन असद्दूषणोद्भावनं सा जातिरिति । तत्केषाम्
25 इत्याह—यथा अनेकान्तविद्विषाम् इति। यथा इत्युदाहरणप्रदर्शने अनेकान्तविद्विषः सौगतादयः तेषाम् इति । कीदृशं तदित्याह—तद्यु ( दध्यु ) ष्ट्रादेरभेदत्वप्रसङ्गादेकचोदनम् इति……।" [ न्यायवि० वि० पृ० ५२६ B. ]

तुलना—न्यायवि० टि० पृ० १६५ पं० ३४।

पृ० ११४. पं० २१. 'असिद्धः'—व्याख्या—"स्वलक्षणैकान्तस्य साधने सिद्धौ
30 अङ्गीक्रियमाणायां सर्वो हेतुः सिद्धसेनस्य भगवतः असिद्धः । कथमिति चेदुच्यते—बहिरिव इति—"अथातो रूपात् चित्रमेकं ज्ञानमिष्यते तत्राह—विरुद्धो देवनन्दिनः हेतुरेकान्तसाधने, क्रमेणेव क्रमेणापि चित्रैकविरोधात्…अपरस्त्वाह—न मया प्रतिभासाद्वैतवादिना परमार्थतः कश्चिद् हेतुरिष्यते यस्तु इष्यते स व्यवहारेण 'प्रामाण्यं व्यवहारेण' इत्यभिधानात् इति तं प्रत्याह—'द्वेधा समन्तभद्रस्य' हेतुः एकान्तसाधने इति पक्षवत् विपक्षेऽपि वर्तते इति
35 द्वेधा अनैकान्तिकः इति यावत्…।" [ सिद्धिवि० टी० पृ० ३२३ A. ]

उद्धृतोऽयम्-"...हेतुरेकान्तसाधने" [न्यायवि० वि० पृ० ५०२ A.]

तुलना-"असिद्धः सिद्धसेनस्य...विरुद्धो मल्लवादिनः। ...द्वेधा समन्तभद्रस्य... हेतुरेकान्तसाधने।" [जैनतर्कवा० पृ० १४२] स्या० रत्ना० पृ० १०३२।

**पृ० ११५. पं० २३. 'जाड्य'**-बौद्धाचार्यैः अह्रीकजाड्यादयोऽपशब्दाः प्रतिवादिनः प्रयुक्ताः। ग्रन्थकारः तत्तत्सिद्धान्तासङ्गतिप्रदर्शनेन बौद्धाचार्या एव तच्छब्दयोग्या इति प्रदर्शयति। जाड्यादिशब्दप्रयोगस्थलानि-"ध्वस्तप्रज्ञानां पञ्च लिङ्गानि जाड्ये" [प्रमाणवा० १।३४२] "तदेतज्जाड्यवर्णितम्" [प्रमाणवा० ४।३५] "एतेनैव यदह्रीकाः किञ्चिदश्लीलमाकुलम्। प्रलपन्ति...।" [प्रमाणवा० १।१८२] हेतुवि० पृ० १२९। वादन्यायटी० पृ० २। "एतत्सांख्यपशोः कोऽन्यः सलज्जो वक्तुमीहते।" [प्रमाणवा० २।१६५] "शृङ्गे गौरित्यलौकिकम्।" [प्रमाणवा० ३।१५०, ४३७] "एषा लोकोत्तरा स्थितिः" [प्रमाणवा० ४।५५] "धिग्व्यापकं तमः" [प्रमाणवा० ३।२३९] वादन्यायटी० पृ० ५१। "तमोविजृम्भणम्" [प्रमाणवार्तिकालं लि० पृ० ३४६] "जयेद् धार्ष्ट्येन वन्धकीम्" [प्रमाणवा० ३।३३४]

इति षष्ठः प्रस्तावः।

---

**पृ० ११६. पं० ६. 'सिद्धम्'**-व्याख्या तुलना च-"सकलं सर्वथैकान्तप्रवादातीतगोचरम्। सिद्धं प्रवचनं सिद्धपरमात्मानुशासनम्॥ सिद्धं प्रमाणमित्यर्थः सिद्ध्यति निर्णयविषयतां गच्छति अनेन अर्थ इति सिद्धमिति...हेत्वन्तरमाह-सिद्धपरमात्मानुशासनम् इति। सिद्धो निश्चितः परमात्मा सकलवस्तुयाथात्म्यदर्शी पुरुषविशेषोऽनुशासनः काले देशे च क्वचिदुत्पन्नस्य अनु पश्चात् शासनः शास्ता यस्य तत्तथोक्तम् यत एवं प्रवचनं ततः सिद्धमिति।" [न्यायवि० वि० पृ० ५३४ A.]

**पृ० ११६. पं० १८. 'पुरुषातिशयो'**-तुलना-न्यायवि० टि० पृ० १६७ पं० ३।

**पृ० ११८. पं० १६. 'श्रोत्रं हि'**-पूर्वपक्षः-"अप्राप्तान्यक्षिमनःश्रोत्राणि।" [अभिधर्म को० १।४३]

तुलना-राजवा० पृ० ४८। तत्त्वार्थश्लो० पृ० २३५। न्यायकुमु० पृ० ८३। सन्मति० टी० पृ० ५४५। स्या० रत्ना० पृ० ३३४।

**पृ० ११८. पं० २८. 'करणसन्निपातोप'**-तुलना-"तदेतेषां पुद्गलानां करणसन्निपातोपनिपाते श्रावणस्वभावः शब्दः पूर्वापरकोट्योरसन् प्रयत्नानन्तरीयको घटादिवत्" [अष्टश०, अष्टसह० पृ० १०७]

**पृ० ११९. पं० २०. 'हीनस्थान'**-तुलना-"मिथ्याज्ञानतदुद्भूततर्षसञ्चेतनावशात्। हीनस्थानगतिर्जन्म...॥" [प्रमाणवा० २।२६०] आप्तप० पृ० १।

**पृ० १२२. पं० ३. 'सम्यग्ज्ञानाङ्कुशः'**-व्याख्या-"शब्द इति सर्वोऽपि पौरुषेयः शब्दः पुरुषार्थस्य निःश्रेयसः तत्कारणस्य अभिधायकोपि तु सत्यो विप्रतिसारविकलश्च, न सर्वोप्यसौ तद्विकलत्वये वा अपि तु सम्यग्ज्ञानाङ्कुशः सम्यग्ज्ञानं तत्प्रणेतुः पुरुषस्य तदर्थविषयं निरुपप्लवं ज्ञानं तदेव अङ्कुशो नियामकः यस्य स एव च अयमेव स्याद्वादामोघलाञ्छनः वचनप्रबन्धः नापरः तत्प्रणेतृणां तज्ज्ञानाभावस्य निवेदनात्...।" [न्यायवि० वि० पृ० ५७८ A.]

**पृ० १२२. पं० ६. 'अहं ममाश्रवो'**–व्याख्या–"समीहते संसारनिवृत्तिं प्रतीयेत, कः ? प्रेक्षाकारी विचारकरणशीलः । कथं समीहते ? सादरं निश्चितनिश्चयप्रकारं च अहम् इत्यादिना दर्शयति। प्रत्येकमत्र इतिशब्दस्य सम्बन्धः, ममशब्दस्य च आश्रवादिभिः, अहमिति, ममास्रव इति, मम बन्ध इति, मम संवर इति, मम कर्मणां निर्जरा इति, मम तेषां क्षय इति च, तत्र आत्मानम् अहमिति निर्दिशति अहम्प्रत्ययवेद्यत्वात् । तस्यासत्कारे कस्य संसारो मोक्षो वा तदुपाये प्रवर्तेत···। " [ न्यायवि० वि० पृ० ५७९ A. ]

इति सप्तमः प्रस्तावः ।

**पृ० १२२. पं० १६. 'द्रव्यपर्याय'**–व्याख्या–"द्रव्यमन्वयिरूपम्, पर्याया व्यावृत्तिधर्म ( र्मा ) णः, सामान्यं सदृशपरिणामः, विशेषो विसदृशः, तेषां च विभागः तेन यौ स्यात् कथञ्चित् विवक्षितधर्मस्य विधिप्रतिषेधौ भावाभावौ ताभ्यां सप्तभङ्गी सप्तानां भङ्गानां समाहारः तद्वचसि प्रवर्त्तते इति··" [ न्यायवि० वि० पृ० ५८७ A. ]

तुलना–न्यायवि० टि० पृ० १६९ पं० ३१।

**पृ० १२५. पं० ४. 'स्वरूपस्य'**–तुलना–"स्वरूपस्य स्वतो गतेः ।" [प्रमाणवा० २।४ ] "न खलु स्वसंवेदनप्रत्यक्षं प्रमाणाप्रमाणविभागमुपदर्शयति सर्वज्ञानेषु स्वसंवेदनस्य भावात् ।" [ प्रमाणवार्त्तिकालं० लि० पृ० ५५ ]

**पृ० १२५. पं० २७. 'नयचक्रतः'**–तुलना–न्यायवि० टि० पृ० १७० पं० ३३।

**पृ० १२६. पं० ८. 'नैगमः'**–तुलना–लघी० टि० पृ० १४५ पं० १०।

**पृ० १२६. पं० ६. 'सर्वमेकम्'**–तुलना–लघी० टि० पृ० १४४ पं० २८।

**पृ० १२६. पं० ११. 'व्यवहार'**–तुलना–लघी० टि० पृ० १४६ पं० ११।

**पृ० १२६. पं० १३. 'ऋजुसूत्रो'**–तुलना–लघी० टि० पृ० १४६ पं० २२।

**पृ० १२६. पं० १५. 'शब्दो'**–तुलना–लघी० टि० पृ० १४६ पं० ३५।

**पृ० १२६. पं० १६. 'अभिरूढः'**–तुलना–लघी० टि० पृ० १४७ पं० ७।

**पृ० १२६. पं० १६. 'इत्थम्भूतः'**–तुलना–लघी० टि० पृ० १४७ पं० १८।

इति अष्टमः प्रस्तावः ।

**पृ० १२७. पं० २. 'ज्ञानं प्रमाण'**–तुलना–लघी० का० ५२। लघी० टि० पृ० १४८ पं० ६ ।

**पृ० १२७. पं० २२. 'प्रामाण्यं'**–तुलना–न्यायवि० टि० पृ० १६६ पं० ३१।

## इति प्रमाणसङ्ग्रहस्य टिप्पणानि ।

# टिप्पणपरिशिष्टम्

**पृ० २. पं० ८. 'तत्र सांव्यवहारिकम्'**–उद्धृतमिदम्–"अकलङ्कोऽप्याह–द्विविधं प्रत्यक्षज्ञानं साव्यवहारिकं मुख्यञ्च। तत्र सांव्यवहारिकमिन्द्रियानिन्द्रियप्रत्यक्षम्। मुख्यमतीन्द्रियज्ञानमिति।" [ नन्दि० मलय० पृ० ७४ ]

**पृ० ५. पं० ८. 'नहि प्रत्यक्षम्'**–तुलना–"यदाह–नहीदमियतो व्यापारान् कर्त्तुं समर्थमिति।" [ प्रमाणवा० स्ववृ० टी० १।४१ ] 5

**पृ० ६. पं० १. 'सदृशापरापरोत्पत्ति'**–पूर्वपक्षः–"स्वहेतोरेव तथोत्पत्तेः क्षणस्थितिधर्मतां तत्स्वभावं पश्यन्नपि मन्दबुद्धिः सत्त्वोपलम्भेन सर्वदा तथाभावस्य शङ्कया सदृशापरापरोत्पत्तिविप्रलब्धो वा न व्यवस्यति।" [ प्रमाणवा० स्ववृ० १।३४ ]

**पृ० ६. पं० ३. 'प्रतिसंविदितोत्पत्ति'**– पूर्वपक्षः–"यदाह–न चेमाः कल्पना अप्रतिसंविदिता एव उदयन्ते व्ययन्ते चेति। नापि तत्प्रतिपत्तौ लिङ्गानुसरणेन तदाकार- 10 समारोपसंशयः शक्यते कल्पयितुम्।" [ प्रमाणवा० स्ववृ० टी० १।५० ]

**पृ० १६. पं० ११. 'आलोकोऽपि'**–पूर्वपक्षः–"यथा इन्द्रियालोकमनस्काराः आत्मेन्द्रियमनस्कारा वा रूपविज्ञानमेकं जनयन्ति" [ प्रमाणवा० स्ववृ० १।७५ ]

**पृ० १६. पं० २४. 'मलविद्ध'**–उद्धृतमिदम्–नन्दि०मलय० पृ० ६६।

**पृ० २२. पं० १३. 'वक्त्रभिप्रेत'**–पूर्वपक्षः–"अपि च वस्तुनान्तरीयकताभावात् 15 तेभ्यो नार्थसिद्धिः, ते हि वक्त्रभिप्रायसूचकाः।" [ प्रमाणवा० स्ववृ १।२१५ ]

**पृ० २६. पं० १५. 'द्रव्यपर्याय'**–तुलना—उत्पादादिसि० पृ० ७२, १३२।

**पृ० ३६. पं० २०. 'अद्वयं'**–पूर्वपक्षः–"अद्वयानां द्वयप्रतिभासादिति। [प्रमाणवा० स्ववृ० १।१०० ]

**पृ० ३७. पं० १. 'तत्र शौद्धोदने'**–तुलना–"तस्यैव तावदीदृशमतिस्थूलं प्रज्ञा- 20 स्खलितं कथं वृत्तं जातमिति कृत्वा सह विस्मयेन अनुकम्पया वर्त्तत इति सविस्मयानुकम्पं नोऽस्माकं चेतः। श्रुतवतोऽप्येवमविद्याविलसितमिति सविस्मयं गाढेन अविद्याबन्धेन सत्त्वाः पीड्यन्त इति सानुकम्पम्। तदत्र अपरेऽपि इदानीं तन्मतानुसारिणः कुमारिलप्रभृतयः परीक्षकम्मन्या एवमेतदनुवदन्तीति निर्दयं निष्कृपमाक्रान्तं भुवनं जगद् येन तमसा तत्तथोक्तं धिग्व्यापकं तमः।" [ प्रमाणवा० स्ववृ० टी० १।२४० ] 25

**पृ० ४५. पं० ७. 'भेदज्ञानात्'**–तुलना–उत्पादादिसि० पृ० ११९।

**पृ० ७४. १. 'अन्यथानुपपन्नत्वं'**–कारिकेयं प्रमाणवा० स्ववृत्तिटीकायाम् ( १।३ ) हेतुलक्षणपूर्वपक्षे 'तदुक्तम्' इति कृत्वा समुद्धृता।

**पृ० ७६. पं० ३० 'दध्युष्ट्रादे'**–पूर्वपक्षः–"सर्वस्योभयरूपत्वम्–उभयग्रहणमनेकत्वोपलक्षणार्थम्. तस्मिन् सति तद्विशेषस्य 'उष्ट्र उष्ट्र एव न दधि, दधि दध्येव नोष्ट्रः' इत्येवं 30 लक्षणस्य निराकृतेः, 'दधि खाद, इति चोदितः पुरुषः किमुष्ट्रं खादितुं नाभिधावति? उष्ट्रोऽपि दध्यभिन्नात् द्रव्यत्वात् अव्यतिरेकात् स्याद् दधि, नापि स एवेति। उष्ट्र एवोष्ट्र इत्येकान्तवादः, येनान्योपि दध्यादिकः ( तः ) स्यादुष्ट्रः। तथा दध्यपि स्यादुष्ट्रः, उष्ट्राभिन्नेन द्रव्यत्वेन दध्नस्तादात्म्येनाभिसम्बन्धात्। नापि तदेवेति, दध्येव दधि, येनान्यदपि उष्ट्रादिकं स्याद्दधि। एतेन सर्वस्योभयरूपत्वं व्याख्यातम्।" [ प्रमाणवा० स्ववृ० टी० १।१८३ ] 35

पृ० ८६. पं० १. 'म्लेच्छादिव्यवहार'–तुलना–"म्लेच्छव्यवहारा अपि केचित् मातृविवाहादयो मदनोत्सवादयश्चानादयः, नास्तिक्यवचांसि च अपूर्वपरलोकाद्यपवादीनि। [ प्रमाणवा० स्ववृ० १।२४७ ]

पृ० ९१. पं० ४. 'संशयादिप्रसंगः'–तुलना – "विरोधस्तावदेकान्ताद्वक्तुमत्र न
5 युज्यते···" [ मी० श्लो० पृ० ५६० ] "यदप्युक्तं भेदाभेदयोर्विरोध इति; तदभिधीयते अनिरूपितप्रमाणप्रमेयतत्त्वस्येदं चोद्यम्। एकस्यैकत्वमस्तीति प्रमाणादेव गम्यते। नानात्वं तस्य तत्पूर्वं कस्माद्भेदोऽपि नेष्यते॥ यत् प्रमाणैः परिच्छिन्नमविरुद्धं हि तत् तथा। वस्तुजातं गवाश्वादि भिन्नाभिन्नं प्रतीयते॥ न ह्यभिन्नं भिन्नमेव वा क्वचित् केनचित् दर्शयितुं शक्यते। सत्ताज्ञेयत्वद्रव्यत्वादिसामान्यात्मना सर्वमभिन्नं व्यक्तात्मना तु परस्परवैलक्षण्याद्भिन्नम्।
10 तथाहि प्रतीयते तदुभयं विरोधः कोऽयमुच्यते। विरोधे चाविरोधे च प्रमाणं कारणं मतम्॥ एकरूपं प्रतीतत्वात् द्विरूपं तत्तथेष्यताम्। एकरूपं भवेदेकमिति नेश्वरभाषितम्॥···अत्र प्रागल्भ्यात् कश्चिदाह–यथा संशयज्ञानं स्थाणुर्वा पुरुषो वेत्यप्रमाणं तथा भेदाभेदज्ञानमिति; तदसत्; परस्परोपमर्देन न कदाचित् सह स्थितिः। प्रमेयानिश्चयाच्चैव संशयस्याप्रमाणता॥ अत्र पुनः कारणं पूर्वसिद्धं मृत्सुवर्णादिलक्षणं ततः कार्यं पश्चाज्जायमानं तदाश्रितमेव
15 जायते······अतो भिन्नाभिन्नरूपं ब्रह्मेति स्थितम्। संग्रहश्लोकः–कार्यरूपेण नानात्वमभेदः कारणात्मना। हेमात्मना यथाऽभेदः कुण्डलाद्यात्मना भिदा॥" [ भास्करभा० पृ० १६–१७ ] "···तस्मात् प्रमाणबलेन भिन्नाभिन्नत्वमेव युक्तम्। ननु विरुद्धौ भेदाभेदौ कथमेकत्र स्याताम्? न विरोधः, सहदर्शनात्। यदि हि 'इदं रजतम्, नेदं रजतम्' इतिवत् परस्परोपमर्देन भेदाभेदौ प्रतीयेयाताम् ततो विरुद्धयेयाताम्, न तु तयोः परस्परोपमर्देन प्रतीतिः। इयं
20 गौरिति बुद्धिद्वयम् अपर्यायेण प्रतिभासमानमेकं वस्तु द्व्यात्मकं व्यवस्थापयति–सामानाधिकरण्यं हि अभेदमापादयति अपर्यायत्वं च भेदम्, अतः प्रतीतिबलादविरोधः। अपेक्षाभेदाच्च;···एवं धर्मिणो द्रव्यस्य रसादिधर्मान्तररूपेण रूपादिभ्यो भेदः द्रव्यरूपेण चाभेदः··" [शास्त्रदी० पृ० ३९३-९५]

पृ० १०४. पं० ५. 'कालादिधर्मि'–पूर्वपक्षः–"तथा न चन्द्रोदयात् समुद्र-
25 वृद्ध्यनुमानं चन्द्रोदयात् ( पूर्वं पश्चादपि ) तदनुमानप्रसङ्गात्। चन्द्रोदयकाल एव तदनुमानं तदैव व्याप्तेर्गृहीतत्वादिति चेत्; यद्येवं तत्कालसम्बन्धित्वमेव साध्यसाधनयोः। तदा च स एव कालो धर्मी तत्रैव च साध्यानुमानं चन्द्रोदयश्च तत्सम्बन्धीति कथमपक्षधर्मत्वम्॥" [ प्रमाणवा० स्ववृ० टी० ११३ ]

पृ० १०५. पं० १३. 'अन्योपलम्भो'–तुलना–"यदाह-अन्यहेतुसाकल्ये तद-
30 व्यभिचाराच्चोपलम्भः सत्ता। तदभावोऽनुपलब्धिरसत्ता, अन्योपलब्धिश्चानुपलब्धिरिति।" [ प्रमाणवा० स्ववृ० टी० १।५ ]

पृ० १०८. पं० २१. 'अदृश्यानुपलम्भात्'–पूर्वपक्षः–"अदृश्यानुपलम्भादभावासिद्धौ घटादेर्नैरात्म्यासिद्धेः प्राणादेरनिवृत्तिः।" [ प्रमाणवा० स्ववृ० १।१९ ]

पृ० १११. पं० ८. 'स विरुद्धो'–तुलना – "असिद्धस्त्वप्रतीतो यो योऽन्यथैवो-
35 पपद्यते। विरुद्धो योऽन्यथाप्यत्र युक्तोऽनैकान्तिकः स तु॥" [ न्यायावता० श्लो० २३ ]

पृ० ११२. पं० २८. 'योगक्षेम'–"अलब्धधर्मानुवृत्तिर्योगः। लब्धधर्मानुवृत्तिः क्षेमः।" [ प्रमाणवा० स्ववृ० १।२४ ]

# § १. लघीयस्त्रयस्य कारिकार्धानामकाराद्यनुक्रमः.

---

## § २. लघीयस्त्रयगतानि अवतरणानि.



---

# § ३. न्यायविनिश्चयस्य कारिकार्धानामकाराद्यनुक्रमः.

## §४. प्रमाणसंग्रहस्य कारिकार्द्धानामकाराद्यनुक्रमः.

---

## § ५. प्रमाणसंग्रहगतानि अवतरणानि.



---

# § ६. लघीयस्त्रय-न्यायविनिश्चय-प्रमाणसंग्रहान्तर्गतानां लाक्षणिकानां दार्शनिकानां च नाम्नां सूचिः ।



१. परिशिष्टेऽस्मिन् लाक्षणिकाः शब्दाः स्थूलाक्षरेण निर्दिष्टाः । स्थूलाङ्काः पृष्ठसंख्याद्योतकाः सूक्ष्माङ्काश्च पङ्क्तिसंख्याबोधका ज्ञेयाः ।

# § ७. टिप्पणनिर्दिष्टानां ग्रन्थानां सूचिः, सङ्केतविवरणञ्च.


अद्वयवज्रसं० **अद्वयवज्रसंग्रहः** ( गायकवाड़ ओरियंटल सीरिज़ वड़ोदा ) १३१.

अनुयोग० / अनु० सू० **अनुयोगद्वारसूत्रम्** ( आगमोदय समिति सूरत ) १३२, १४४, १४५–१४७, १५२–१५४.

अनेकान्तजय० **अनेकान्तजयपताका** ( यशोविजय ग्रन्थमाला काशी ) १६३.

अन्ययोगव्य० / स्याद्वादमं० का० **अन्ययोगव्यवच्छेदद्वात्रिंशतिका** ( रायचन्द्र शास्त्रमाला बंबई ) १४२, १७०.

अभिधर्मको० **अभिधर्मकोशः** ( काशीविद्यापीठ ग्रन्थमाला ) १६२, १६९, १७९.

अभिधर्मको० व्या० **अभिधर्मकोशव्याख्या** ( काशी विद्यापीठ ग्रन्थमाला ) १५६.

अभिसमयालंकारालो० **अभिसमयालङ्कारालोकः** (गा० सीरिज़ वड़ोदा ) १३१, १७२.

**अमरकोशः** ( निर्णयसागर बंबई ) १७५.

अवयविनिरा० **अवयविनिराकरणम्** ( एशियाटिक सोसाइटी कलकत्ता ) १६०.

अष्टश०, अष्टसह० **अष्टशती, अष्टसहस्र्यां मुद्रिता** ( निर्णयसागर बंवई ) १३४, १३७, १३९, १४०, १४२, १४५, १५९, १६०, १६८, १७०, १७२–१७५, १७७–१७९.

अष्टसह० **अष्टसहस्री** ( निर्णयसागर बंबई ) १३१, १३४; १३८, १४०, १४६, १५५, १५६, १५९, १७०, १७१, १७३.

अष्टसह०वि० **अष्टसहस्रीविवरणम्** ( जैनग्रन्थ प्रकाशक सभा अमदाबाद ) १५०.

आत्मतत्त्ववि० **आत्मतत्त्वविवेकः** (जीवानन्द कलकत्ता ) १६८.

आप्तप० **आप्तपरीक्षा** ( जैनसिद्धान्तप्रकाशिनी संस्था कलकत्ता ) १३३, १५५, १५८, १७९.

आप्तमी० **आप्तमीमांसा** ( जैनसिद्धान्तप्रका० संस्था कलकत्ता ) १४२, १४३, १४५, १५१, १६८, १७०.

**आराधनाकथाकोशः** ( बंबई ) १६४.

आव० नि० **आवश्यकनिर्युक्तिः** ( आगमोदय समिति सूरत ) १३४, १४४–१४७, १५१, १५२.

आव० नि० मलय० **आवश्यकनिर्युक्तिमलयगिरिटीका** ( आगमोदय समिति सूरत ) १४२, १४३, १४८, १४९, १५२, १५३.

इष्टोपदेशटी० **इष्टोपदेशटीका** ( माणिकचन्द्र ग्रन्थमाला बंबई ) १४८.

उत्तरा० **उत्तराध्ययनसूत्रम** ( आगमोदय समिति सूरत ) १६१.

उत्पादादिसि० **उत्पादादिसिद्धिः**( जैनानन्द पुस्तकालय सूरत) १८१.

**उपायहृदयम्** (गा० सीरिज़ वड़ौदा) १६६.

कर्मग्रं० **कर्मग्रन्थाः** ( आत्मानन्द ग्रन्थमाला भावनगर ) १५४.

कर्मग्रन्थटी० **कर्मग्रन्थटीका** ( आत्मानन्द ग्रन्थमाला भावनगर ) १४८.

क्षणभंगसि० **क्षणभंगसिद्धिः** ( एशियाटिक सोसाइटी कलकत्ता ) १३७.

गुरुतत्त्ववि० **गुरुतत्त्वविनिश्चयः** ( आत्मानन्द सभा भावनगर ) १४९–१५१.

**चतुःशतकम्** (विश्वभारती ग्रन्थमाला शान्तिनिकेतन) १६०.

**जीवकाण्डम्** ( रायचन्द्रशास्त्रमाला बंबई ) १५४.

जैनतर्कभा० **जैनतर्कभाषा** ( सिंघी जैन सीरिज़ कलकत्ता ) १३२–१३५, १३९, १४३–१५०, १५२, १५३, १६२,१६३, १७०, १७५ १७७.

जैनतर्कवा० **जैनतर्कवार्त्तिकम्** ( लाजरस कम्पनी काशी ) १३२, १४७, १५५, १६१, १६४, १७१, १७२, १७५, १७९.

जैनतर्कवा०वृ० **जैनतर्कवार्त्तिकवृत्तिः** ( लाजरस कम्पनी काशी ) १३३.

जैनशिलालेखसं० **जैनशिलालेखसंग्रहः** ( माणिकचन्द्र ग्रन्थमाला बंबई ) १७१.

तर्कभा०मो० **तर्कभाषा मोक्षाकरगुप्तीया लिखिता** ( मुनि पुण्यविजयसत्का पाटन ) १३५, १४२, १६८.

**तर्कशास्त्रम्** ( गा० सीरिज़ बड़ौदा )१६६.

तत्त्वसं० **तत्त्वसंग्रहः** ( गा० सीरिज़ बड़ौदा) १३१, १३६–१३८, १४५, १४६, १५५, १५७, १५९–१६४, १६७–१६९.


१ परिशिष्टेऽस्मिन् अङ्काः पृष्ठसंख्याबोधका ज्ञेयाः ।

# § ८. टिप्पणनिर्दिष्टानाम् आचार्याणां सूचिः.

## § ९. अकलङ्कप्रणीतत्वेनोक्तानां लघीयस्त्रयादिग्रन्थत्रयबाह्यानां कियतां गद्यपद्यानां सूचिः ।

§ १. सिद्धिविनिश्चयटीकायां लिखितायाम्—

पृ० ६९ A. "कथमन्यथा न्यायविनिश्चये 'सहभुवो गुणाः' इत्यस्य 'सुखमाल्लादनाकारं विज्ञानं मेयबोधनम् । शक्तिः क्रियानुमेया स्याद्यूनः कान्तासमागमे ।।' इति निदर्शनं स्यात् ।"

[ न्यायविनिश्चयविवरणे ( पृ० २३० B. ) 'सुखमाल्लादनाकारम्' इति श्लोकः 'तदुक्तं स्याद्वादमहार्णवे' इति कृत्वा समुद्धृतः । निम्नग्रन्थेष्वपि समुद्धृतोऽयम्–अष्टसह० पृ०७८ । न्यायकुमु० पृ० १२९ । सन्मति० टी० पृ० ४७८ । स्या० रत्ना० पृ० १७८ । प्रमेयरत्नमा० ४।७ ]

पृ० १२० A. तदुक्तं न्यायविनिश्चये–"न चैतद्बहिरेव किं तर्हि ? बहिर्बहिरिव प्रतिभासते कुत एतद् भ्रान्तेः तदन्यत्र समानमिति ।"

§ २. तत्त्वार्थश्लोकवार्तिके—

पृ० १८९. युक्तमुक्तञ्च कैश्चन–"अक्षज्ञानैरनुस्मृत्य प्रत्यभिज्ञाय चिन्तयेत् । आभिमुख्येन तद्भेदान् विनिश्चित्य प्रवर्तते ।।" [ **सिद्धिवि० पृ० ९७ B.** ]

[ श्लोकोऽयं न्यायविनिश्चयविवरणे ( पृ० ४२४ B. ४६३ B. ) समुद्धृतः ]

पृ० २८१. तथोक्तम्–"स्वपक्षसिद्धिरेकस्य निग्रहोऽन्यस्य वादिनः । नासाधनाङ्गवचनं नादोषोद्भावनं द्वयोः ॥"

[ श्लोकोऽयम् अष्टसहस्र्यां ( पृ० ८७ ) प्रमेयकमलमार्त्तण्डे च ( पृ० २०३ A. ) उद्धृतः ]

पृ० ४२४. तथा चाहुरकलङ्कदेवाः–"शब्दः पुद्गलपर्यायः स्कन्धः छायातपादिवत् ।" [ **सिद्धिवि० पृ० ४६३ A.** ]

§ ३. प्रमाणपरीक्षायाम्—

पृ० ५४. तदुक्तम्—"व्यवसायात्मनो दृष्टेः संस्कारः स्मृतिरेव वा ।<br>दृष्टे दृष्टसजातीये नान्यथा क्षणिकादिवत् ।।" [सिद्धिवि० पृ० २१]

[ पूर्वार्द्धं न्यायविनिश्चयविवरणेऽपि ( पृ० ३६९ A. ) उद्धृतम् ]

§ ४. न्यायकुमुदचन्द्रे—

पृ० ३७०. "द्रव्यात् स्वस्मादभिन्नाश्च व्यावृत्ताश्च परस्परम् । उन्मज्जन्ति निमज्जन्ति जलकल्लोलवज्जले ।" [ **सिद्धिवि० पृ० १७४** ]

§ ५. न्यायविनिश्चयविवरणे लिखिते—

पृ० २३ A. कथं तर्हि कथितम् "स्वपक्षसिद्धिरेकस्य निग्रहोऽन्यस्य वादिनः ।"

पृ० ३० A. ५० A. उक्तञ्च–"सिद्धं यन्न परापेक्षं सिद्धौ स्वपररूपयोः । तत्प्रमाणं ततो नान्यदविकल्पमचेतनम् ।।" [ **सिद्धिवि० पृ० ८० A.**]

पृ० ४९ B. तदुक्तं सिद्धिविनिश्चये–"पश्यन् स्वलक्षणान्येकं स्थूलमक्षणिकं स्फुटम् । यद्व्यवस्यति वैशद्यं तत्सिद्धयेद्विसदृशस्मृतेः ( तद्विद्धि सदृशस्मृतेः ) ।।" [ **सिद्धिवि० पृ० ३२** ]

पृ० ८४ A. यद्वक्ष्यति–"सकलाकारं वस्तु निर्विकल्पकमिति ।"

पृ० ८६ B. एतदेव स्वयं देवैरुक्तं सिद्धिविनिश्चये–"प्रत्यासत्त्या ययैकं स्यात् भ्रान्तिप्रत्यक्षयोस्तथा । भागतद्वदभेदेऽपि ततस्तत्त्वं द्वयात्मकम् ।।" [**सिद्धिवि० पृ० ३१५**]

पृ० ९२ B. तदुक्तम्–"जीवस्य संविदो भ्रान्तिनिमित्तं मदिरादिवत् । तत्कर्मागन्तुकं तस्य प्रबन्धोऽनादिरिष्यते ।।" [ **सिद्धिवि० पृ० ३७३** ]

[ श्लोकोऽयं प्रमाणनिर्णयेऽपि ( पृ० ७१ ) समुद्धृतः ]

पृ० ९३ B. २०३ A. २२५ A. ४०५ A. तदिदमपि वचनमनवद्यं देवस्य–" न पश्यामः क्वचित् किञ्चित् सामान्यं वा स्वलक्षणम् । जात्यन्तरं तु पश्यामः ततोऽनेकान्तसाधनम् ॥" [सिद्धिवि० पृ० १२१]

[ श्लोकोऽयम् उत्पादादिसिद्धौ (पृ० ७१ ) समुद्धृतः ]

पृ० ९३ A १०३ A. ४९५ A. तथाच देवस्य अन्यत्र वचनम्–"व्यवसायात्मकं ज्ञानं प्रत्यक्षं स्वत एव ते । अभिधानाद्यपेक्षायां भवेदन्योन्यसंश्रयः ॥"

पृ० १२२ B. तदुक्तम्–"दृश्यदर्शनयोः मुक्तिर्नित्यव्यापकयोः कथम् । यतस्तासादिमुच्येत तदर्थं वा तपश्चरेत् ॥" [सिद्धिवि० पृ० ४५७ A.]

पृ० १३१ B. तथा च सूक्तं चूर्णौ देवस्य वचनम्–"समारोपव्यवच्छेदात् प्रामाण्यमनुमानवत् । स्मृत्यादितर्कपर्यन्तं लिंगिज्ञाननिबन्धनम् ॥"

पृ० २१९ A. तदुक्तम्–"स्वीकुर्वन्ति गुणानर्था यया शक्त्या गुणा न किम् ।" [ सिद्धिवि० पृ० ५९१ A. ]

पृ० २२२ B. उक्तञ्चैतत्–"स्वतोऽन्यतो विवर्तेत क्रमाद्धेतुफलात्मना।" [सिद्धिवि० पृ० १७३]

पृ० २३२ A. देवैर्निवेदितं चैतत्–"द्रव्यात् स्वस्मादभिन्नाश्च व्यावृत्ताश्च परस्परम् । लक्ष्यन्ते गुणपर्याया दि ( धी ) विकल्पाविकल्पवत् ॥" [ सिद्धिवि० पृ० १७४ ]

पृ० ३४९ B. देवैरुक्तम्–"मिथ्यैकान्ते विशेषो वा कः स्वपक्षविपक्षयोः ।"

पृ० ३६२ A. देवैरुचितमुक्तम्–"अखण्डताण्डवारम्भविकटाटोपभूषणम् । शिखण्डिमण्डलं वीक्ष्य काकोऽपि किल नृत्यति ॥"

पृ० ३८५ A. उक्तञ्चैतत्–"अभेदात् सदृशस्मृत्यामर्थाकिल्पधियां न किम् । संस्कारा विनियम्येरन् यथास्वं सन्निकर्षिभिः ॥" [ सिद्धिवि० पृ० २८ ]

पृ० ४१५ A. देवैरन्यत्रोक्तम्–"अदृश्यानुपलम्भादेकैकान्ते यन्न लक्षयेत् । पिशाचो नाहमस्मीति दृश्यादृश्यविवेकधीः ॥" [ सिद्धिवि० पृ० ३४८ ]

पृ० ५२६ A. देवैरन्यत्र भाषितम्–"तन्वादिकरणात् सत्त्वान् भवक्लेशेन योजयेत् । बुद्धिमानीश्वरः कस्मात् स्वयं द्रोहमकुर्वतः ॥" [ सिद्धिवि० पृ० ३८० ]

पृ० ५२९ A. तदुक्तम्–"वादिनोऽनेकहेतूक्तौ निगृहीतिः किलेष्यते । नानेकदूषणस्योक्तौ वैतण्डिकविनिग्रहः ॥" [ सिद्धिवि० पृ० २८७ A. ]

पृ० ५२९ A. उक्तञ्च–"सर्वनाम्ना विना वाक्यं तद्धि तेन विना पदम् । संक्षेप्तव्यं समासार्थं निग्रहस्थानभीरुणा ॥" [ सिद्धिवि० पृ० २८० A. ]

पृ० ५३१ B. उक्तमेवेदम्–"स्वपक्षसिद्धिरेकस्य निग्रहोऽन्यस्य वादिनः ।"

पृ० ५३६ A. उक्तञ्च–"जीवानामसहायाक्षादशास्त्रार्थविदः क्रमात् । विज्ञानातिशये विद्वान्न वै विप्रतिपद्यते ।" [ सिद्धिवि० पृ० ४१५ ]

पृ० ५७१ A. कथं तर्हि शास्त्रकारेण अन्यत्र प्रतिपादितम्–"योग्यः शब्दो विकल्पो वा सर्वः सर्वत्र चेत् स्वतः । मिथ्यात्वं परतस्तस्य चक्षुरादिधियामिव ॥" [ सिद्धिवि० पृ० २९३ B. ]

§ ६. प्रमाणनिर्णये—

पृ० २. अत एवोक्तम्–"प्रमाणस्य साक्षात्फलं ( फलं साक्षात् ) सिद्धिः स्वार्थविनिश्चयः ।" [ सिद्धिवि० पृ० १२६ A. ]

§ ७. स्याद्वादरत्नाकरे—

पृ० ६४१. यदाहाकलंकः सिद्धिविनिश्चये–"वर्णसमुदायः पदमिति प्रायिकमेतत् प्रत्येकमकारादेः कादाचित्कत्वदर्शनात् ।"

§ ८. रत्नाकरावतारिकायाम्—

पृ० ११३७. प्रकटिततीर्थान्तरीयकलङ्कोऽकलङ्कोपि प्राह–" वादन्याये दोषमात्रेण यदि पराजयप्राप्तिः पुनरुक्तवत् श्रुतिदुष्टार्थदुष्टकल्पनादुष्टादयोऽलङ्कारदोषाः पराजयाः कल्पेरन्निति ।"

पृ० ११२१. अकलंकोऽप्यभ्यधात्–"विरुद्धं हेतुमुद्भाव्य वादिनं जयतीतरः। आभास तर-मुद्भाव्य पक्षसिद्धिमपेक्षते ॥"

[श्लोकोऽयं तत्त्वार्थश्लोकवार्त्तिके (पृ० २८०) सन्मति० टीकायां (पृ० ७५९) न्याय वि० विवरणे (पृ० ५२८ A.) प्रमाणमीमांसायाञ्च (पृ० ६५) उद्धृतः]

§ ९. प्रमाणमीमांसायाम्—

पृ० १२. यदाह–"धीरत्यन्तपरोक्षेऽर्थे न चेत्पुंसां कुतः पुनः। ज्योतिर्ज्ञानाविसंवादः श्रुताच्चेत् साधनान्तरम् ॥ त्रिकालविषयं तत्त्वं कस्मै वेदो निवेदयेत्। अक्षय्यावरणैकान्तान्न चेद्वेद तथा नरः ॥"
[सिद्धिवि० पृ० ४१३, १४]

§ १०. सप्तभङ्गतरङ्गिण्याम्—

पृ० ७९. तदुक्तं भट्टाकलङ्कदेवैः—"प्रमेयत्वादिभिर्धर्मैरचिदात्मा चिदात्मकः।
ज्ञानदर्शनतस्तस्माच्चेतनाचेतनात्मकः ॥"
[श्लोकोऽयं स्वरूपसम्बोधने मूलरूपेण निष्टङ्कितः]

## शुद्धयः पाठभेदाश्च

| | पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| | ३. | १०. | प्रमाण्यं | प्रामाण्यम् |
| | ६. | १७. | -रन्तश्च प्रत्य- | -रन्तश्चाप्रत्य- |
| | ८. | २२. | -वियष- | -विषय- |
| | ९. | ७. | अक्षधीःस्मृति- | अक्षधीस्मृति- |
| | १२. | १७. | –कालनियमा- | -कालस्वभावनियमा- |
| | १४. | २१. | इति श्रुतेः। प्र- | इति। श्रुतेः प्र- |
| | १४. | २३. | तदतिसूक्ष्मे- | तदपि सूक्ष्मे- |
| | २०. | ३. | मूमूर्षाणां | मुमूर्षूणाम् |
| | २०. | १३. | अलक्षणत्वेन | लक्षणत्वेन |
| | २१. | १९. | परिणामतो | परमागमतो |
| | २२. | ५. | -देशवाक्येषु | -देशादिवाक्येषु |
| P. | २३. | १६. | -प्रस्तावमूल- | -प्रस्तारमूल (न्यायकुमुदचन्द्रे) |
| | २३. | २३. | गुणीभूता सु- | गुणीभूताः सु- |
| | २४. | ११. | श्रुतज्ञानेन | श्रुतज्ञानस्य |
| P. | २५. | ८. | -भेदकृत् | –भेदकः (न्यायकुमुदचन्द्रे) |
| P. | २५. | २७. | -निरूपणम् | -निरूपणप्रवणम् (न्यायकुमुदचन्द्रे) |
| | ३०. | २४. | -र्थैकतानत्व- | र्थैकनानात्व- |
| P. | ३२. | १७. | असिद्धिरि- | असिद्धेरि- |
| | ३९. | २०. | निश्चयः | विनिश्चयः |
| | ४१. | १०. | -कानन्वयत्वतः | -कान्वयत्वतः |
| | ४२. | २. | -कुर्यान्नै- | कुर्युर्नै- |
| P. | ४३. | ३०. | अनन्य- | अन्यान्य- |
| | ४५. | २९. | अन्वर्थ- | अनर्थ- |
| P. | ४६. | २८. | –द्धधर्माध्यासेन | –द्धप्रतिभासेन |
| P. | ४७. | १. | स्यादसंभवतादा- | असंभवदतादा- |
| | ४८. | ११. | -त्मनस्त- | -त्मनोस्त- |
| | ५३. | १६. | सर्वस्तुसत्तां | सर्ववस्तुसत्तां |
| P. | ५४. | ९ | प्रामाण्यमविसं- | प्रमाणमर्थसं- |
| | ५४. | १०. | क्षाभाप्र- | -क्षाभेऽप्र- |
| | ५४. | २७. | केवलं | केवलः |
| | ५८. | ३. | -मानंतदि- | -मानवदि- |
| | ५९. | ५. | भेदव- | भेदिव- |
| | ६०. | १०. | चेदभि- | चेदत्राभि- |
| | ६०. | ३०. | तदनेकान्तात्मकं | तदनेकात्मकं |
| | ६१. | १४. | प्रसक्तं | प्रसक्ता |
| | ६२. | १२. | कार्यकरणयोः | कार्यकारणयोः |
| P. | ६६. | २७. | वहिर्गतः | बहिरङ्गः |
| | ७१. | २९. | क्षणङ्गोपि | क्षणभङ्गोऽपि |
| | ७२. | २. | न च ते | नचर्ते |
| | ७९. | १७. | सर्वार्थान्यास- | सर्वान्यार्थास- |
| | ८२. | १८. | सर्वथासद्- | सर्वथाऽसद्- |
| | ८२. | २२. | करुणेष्टमत्य- | करुणात्य- |
| | ८४. | ५. | -लौकिकम् | -लौकिके |
| | ८४. | २६. | -मर्थ्याच्चैं- | -मर्थ्यचै- |
| P. | ८८. | ५. | सकलाग्र- | साकल्याग्र- |
| | १०१. | ३. | कुतका | कुतर्को |
| | १११. | ४. | -ञ्चित्करोज्ञातः | -ञ्चित्करोऽज्ञातः |
| | २८. | ८. | १०५. १०६. | परिशिष्टेषु |
| | ३९. | ३९. | ४६. ८६. | परिशिष्टेषु |

P. एतच्चिह्नाङ्किताः पाठभेदाः।